आयुर्वेदीयग्रन्थमाला

षष्ठं पुष्पम् ।

श्रीगोविन्दाचार्यविरचितो

# रससारः ।

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा

संशोधितः प्रकाशितश्च ।



ÂYURVEDÎYA-GRANTHAMÂLÂ.

No. 6.

# RASASÂRA.

BY

GOVINDÂCHÂRYA.

EDITED AND PUBLISHED

BY

VAIDYA JÂDAVJÎ TRICUMJÎ ÂCHÂRYA,

372, BORÂ BAZÂR STREET, FORT, BOMBAY.

1912.

मूल्यं ९ आणकाः ।

*Price 9 annas.*

# भूमिका



रससारकर्ताऽयं श्रीगोविन्दाचार्य आचार्यसहदेवपौत्रः, मुरादित्यपुत्रः, अन्तर्वेदीसमुत्पन्नसारस्वतब्राह्मणजातीयश्रीधीरदेवशिष्यः, मोढाख्यब्राह्मणजातीयो गुर्जरदेशनिवासी चासीदिति स्वेनैव ग्रन्थान्ते लिखितादात्मवृत्तान्तात्प्रतीयते। स चायं ख्रीस्तीयत्रयोदशशताब्द्यां समजनीति 'डॉ. प्रफुल्लचन्द्रराय D. Sc, Ph. D.' इत्येतेषां मतम्[3]। अयं च रससारः प्रायेण धातुवाद-(Alcemi) विषयक एव। ताम्रवङ्गाद्यल्पमूल्यधातुभ्यः स्वर्णरौप्यकरणविषयमेव प्रधानीकृत्यास्य ग्रन्थस्य प्रवृत्तिः। स च विषयोऽस्मिन् स्फुटतया नातिसंक्षेपविस्तरेण प्रतिपादितः। एतद्ग्रन्थावलोकनेन गोविन्दाचार्यसमये रसविद्या भारतवर्षे बौद्धमतावलम्बिषु सम्यग्लब्धप्रचारा आसीदिति प्रतीयते। तथा चोक्तं रङ्गाकृष्टिविषये 'एतद्बौद्धा विजानन्ति भोटदेशनिवासिनः' (९ प. २ श्लो.) इति; तथा ग्रन्थान्ते च 'बौद्धं मतं तथा ज्ञात्वा रससारः कृतो मया' (२६ प. ३६ श्लो.) इति। ग्रन्थस्यास्य मुद्रणार्थमादर्शपुस्तकचतुष्टयमुपलब्धम्। प्रथमं क.संज्ञितं महीसुरराजकीयपुस्तकालयस्थं, द्वितीयं ख.संज्ञितं मदीयसुहृदां वटोदरपत्तननिवासिनां 'विनायक सदाशिव जाम्बेकर' इत्येतेषां, तृतीयं ग.संज्ञितं मदीयपरमसुहृदां स्वर्गवासिनां वैद्यमुरारजीशर्मणां, चतुर्थं घ.संज्ञितं च मदीयपरमसुहृदां 'वैद्य त्र्यम्बक गुरुनाथ काळे' इत्येतेषाम्। एवं पुस्तकचतुष्टयसहायेन यथामति संशोधितोऽयं ग्रन्थः। ग्रन्थस्यास्य शुद्धिपत्रकरणे अमरावतीनिवासिभिः 'श्रीयुत विनायक पद्माकर जोशी' इत्येतैः, तथा 'वैद्य त्र्यम्बक गुरुनाथ काळे' इत्येतैश्च महत्साहाय्यमनुष्ठितं, अतस्तानप्यत्र संभावयामि। ग्रन्थस्यास्य संशोधने यथामति कृतेऽपि यत्ने दृष्टिदोषादनवधानादज्ञानाद्विपरीतज्ञानाद्वा क्वचित्स्खलनं जातमुपलभ्येत चेद्गुणैकपक्षपातिभिर्विद्वद्भिः संशोधनीयं क्षन्तव्यश्चाहमित्यभ्यर्थयते—

भिषजामनुग्राह्यो

**यादवशर्मा।**

---

१ अन्तर्वेदी गङ्गायमुनयोर्मध्यप्रदेशः।

२ यतो मोढब्राह्मणानां वसतिर्गुर्जरदेश एवोपलभ्यते।

3 See history of Hindu chemistry introduction Page 65-69.

# आयुर्वेदीयग्रन्थमाला ।

श्रीगोविन्दाचार्यविरचितं ।

## रससारः ।

### अथ प्रथमः पटलः ।

गणेशं प्रणिपत्यादौ शिवं च शिवय सह ।
गुरुभैरवसि[1]द्धांश्च योगिनीं ग्रहमण्ड[2]लम् ॥ १ ॥
प्रणम्य शिरसा नित्यं भक्त्या तत्पादपङ्कजम् ।
हरिं ध्या[3]त्वा परं देवं रसेन्द्रं शिवमव्ययम् ॥ २ ॥
आलोक्य सर्वशास्त्राणि अनुभूय यथा[4]स्थिति ।
सारात्सारं समुद्धृत्य संक्षेपादर्थगौरवात् ॥ ३ ॥
रससारं प्रवक्ष्यामि नानासिद्धैश्च भाषितम् ।
साधकानां हितार्थाय लोकानामनुकम्पया ॥ ४ ॥
मलहीनो यदा सूतः पितामहसमो भवेत् ।
स बद्धो विष्णुराख्यातो रञ्जितः शिव उच्यते ॥ ५ ॥
सारितो मारितश्चैव स एव जगदीश्वरः ।
संक्रामं[5]ति यदा धातून् वेधं[6]ते च सेश्वरः ॥ ६ ॥
स एव भगवान्नाथस्त्रैलोक्यदुरितापहः ।
जराव्याधिविनाशी च मृत्युदारिद्र्यनाशनः ॥ ७ ॥

---

१-'सिद्धेभ्यो' ग. । २ 'योगिनीग्रहमण्डलान्' ग. । ३ 'ध्यायन्' ग. ।
४ 'यथास्थितम्' ग. । ५ 'संक्रामते' ग. । ६ 'वध्यते' ग. ॥

ॐ हस्ते मम सिद्धिं देहि सिद्धिं देहि स्वाहा । ॐ ईश्वर-[1]
राय नमः । ॐ रसेश्वराय नमः । इति रसेश्वरमनुः ।

ॐ ऐं ह्रीं श्रीं रं वीं ह्रौं भगवति घोरे ह्रौं रसाङ्कुशेश्वरि हंसाहंसी ह्रां ह्रीं ह्रं त्रयं नमः । अघोरमुखी छां छुं किणि किणि विच्चै क्षैं स्व्यैं श्रीं ह्रीं ऐं रसं स्तम्भय स्तम्भय स्वाहा इति रसाङ्कुशी महाविद्या ॥

देहि मे रसराजेन्द्र देवैस्त्वं सह साधकैः ।
खेचरत्वं वयःस्तम्भं लोहसिद्धिं तथा पराम् ॥ १५ ॥
तिष्ठ तिष्ठ सुरश्रेष्ठ सिद्धिं साधय मे प्रभो[2] ।
चञ्चलत्वं परित्यज्य वह्नौ त्वं सुस्थिरो भव ॥ १६ ॥
त्रैलोक्यदुःखनाशाय शिवः प्रत्यक्षतां गतः[3] ।
कालग्रस्तं भयग्रस्तं त्राहि त्राहि सुरेश्वर[4] ॥ १७ ॥
वेदाध्ययनदानैश्च तपोभिर्यज्ञकर्मभिः ।
मुक्तिर्भवति केषांचित्तनुस्तत्र[5] न विद्यते ॥ १८ ॥
भुक्तिर्मुक्तिर्वयःस्तम्भो लोहसिद्धिश्च खेगतिः ।
एतत्कौतूहलं लोके प्राप्नोति रसराजतः ॥ १९ ॥
इच्छाभोगफलास्वादी[6] शस्त्रास्त्रैश्च न भिद्यते ।
त्रैलोक्ये विचरेन्नित्यं मोदते ह्यमरैः सह ॥ २० ॥
धर्मार्थकाममोक्षाख्याः पुरुषार्थाश्चतुर्विधाः ।
सिध्यन्ति नात्र सन्देहो रसराजप्रसादतः ॥ २१ ॥

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे रसपूजास्वरूपस्तुत्यधिकारो नाम प्रथमः पटलः ॥

---

स्वाहा, वरदाय स्वाहा, अक्षराय स्वाहा, नुद नुद स्वाहा, इति बहुरूपाय स्वाहा' ग. ॥

१ 'श्रीं ईश्वराय नमः' ग. । २ 'सिद्धिं साधय मे प्रभो' ग. । ३ 'प्रत्यक्षमागतः' ख. । ४ 'रसेश्वर' ख. । ५ 'वै तेषां क्लेशस्तत्र न' ख.; 'वै तेषां क्लेशस्तत्र च' ग. । ६ 'फलावाप्तिः' ख. ग. ॥

## अथ द्वितीयः पटलः ।

वैक्रान्तं सस्यकं तार्घ्यं दरदं रसकं गिरिः[1] ।
विमला चैव[2] कान्तं च संग्राह्या रसकर्मणि ॥ १ ॥
गन्धकं कुन्टीं तालं गैरीं काङ्क्षीं रसाञ्जनम् ।
कासीसं टङ्कणकङ्कुष्ठे आनयेद्धि विचक्षणः ॥ २ ॥
काचं बहुविधं व्योम श्वेतरक्तादिभेदतः ।
राजावर्तं शिखिग्रीवं क्षारांश्च लवणानि च ॥ ३ ॥
सुवर्णं रजतं ताम्रं लोहं च त्रपु सीसकम् ।
रीतिकां कांस्यकं चैव अष्टधातून् क्रमेण तु ॥ ४ ॥
वज्रं मुक्ताफलानि[3] च पद्मरागं सनीलकम् ।
मरक्कं[4] पुष्परागं च मेदो[5]वैडूर्यविद्रुमम् ॥ ५ ॥
मृगनाभिं सुकर्पूरमगुरुं कृष्णसंज्ञकम्[6] ।
विषाणि चैव सर्वाणि स्थावराणि चराणि[7] च ॥ ६ ॥
सहायाः शोभनाः प्राज्ञाः सर्वभूतहिते रताः ।
गुरुभक्ता जितात्मानो द्रव्य[8]लोभादिनिस्पृहाः ॥ ७ ॥
उलूखलः[9] शिलापट्टः खल्वो मुसलपिण्डिके ।
खर्पराणि विचित्राणि लोष्टं[10] चुल्ली च कण्डनी[11] ॥ ८ ॥
रेतनी नलिका भस्त्री हतोडी कर्तरी कणी ।
छिन्नी संदशनी चर्म अहिंणी घनसंयुता[12] ॥ ९ ॥

---

१ गिरिः शिलाजतुकम् । २ 'च चपलं' ग. । ३ 'वज्रमुक्ताफलान्यष्टौ' ग; 'वज्रं मुक्ताफलान्यष्टौ' ख. । ४ मरक्कं मरकतमणिम् । ५ मेदो गोमेदमणिः । ६ 'कृष्णसर्जिकम्' ग. । ७ 'स्थावराण्युरगानि च' ख. ग. चराणि जङ्गमानि । ८ 'रत्नलोहादिनिस्पृहाः' ख. । ९ 'उलूखशिलापट्टखल्वोपलसुपिण्डिकाः' ग. । १० 'लोहचुल्हीं' ग. । ११ उलूखलः धान्यादिकण्डनसाधनं काष्ठमयं पात्रम्; शिलापट्टः शिलापुत्रः, कल्कपेषणसाधनभूतः; पिण्डिका प्रस्तरमयी, यस्या उपरि कल्कः पेष्यते; कण्डनी लोहनिर्मितोदूखलः; कण्डनीत्यत्र हण्डिकेति पाठान्तरम् । १२ रेतनी लोह-

तोलनानि विचित्राणि लघुस्थूलानि तोलने[1] ।
राजिकादिमणान्तानि प्रोक्तानि क्रमशो बुधैः ॥ १० ॥
दिव्यौषधीः समादद्यात्तैलानि विविधानि च ।
ओषधीकन्दजान् क्षारान् मञ्जिष्ठादिगणं वरम् ॥ ११ ॥
मूषाश्च विविधाः कार्या द्विविधं वक्रनालकम् ।
विरच्य बहुधा कोष्ठीं कोकिलाकाष्ठसंग्रहम् ॥ १२ ॥
सर्वजीववसारक्तं पित्तानि विविधानि च ।
कालयोगे मृतो जीवो ग्रहणं तस्य कारयेत् ॥ १३ ॥
अम्लवर्गः, समग्राश्च कषायमूत्रसंभवाः[2] ।
संधानं च प्रकर्तव्यं क्षारैरम्लैर्महौषधैः ॥ १४ ॥
कार्यं बहुविधं यन्त्रं काचकूप्यो ह्यनेकशः ।
भूनागमृत्तिकामृत्स्नालोहकिट्टानि कर्कराः[3] ॥ १५ ॥
व्रीहिधान्यसमुद्भूतास्तुषा दग्धाः प्रयत्नतः ।
एभिर्द्रव्यैः समायुक्तो रसकर्म समारभेत् ॥ १६ ॥
देशं द्रव्यं च कौशल्यं शास्त्रतत्त्वं गुरुक्रमम् ।
यो वेत्ति सत्यवादी च यत्नवान्[4] शाठ्यवर्जितः ॥ १७ ॥
गुणग्राही च सर्वेषां देवतातिथिपूजकः ।
योगी कन्यार्चने युक्तो नित्यं जपपरायणः ॥ १८ ॥

---

चूर्णकरणसाधनं 'कानस' इति प्रसिद्धा; कणीति स्वर्णकाराणामुपकरणविशेषः; छिन्नी धात्वादिद्विधाकरणसाधनं लोहमयं शस्त्रम्; आर्हिणीति यस्या उपरि लोहादिकं स्थाप्य घनेन संकुट्यते सा आर्हिणी, 'एरण' इति प्रसिद्धा ॥

१ 'तोलनी' इति पाठान्तरे तुलेत्यर्थः । २ 'वर्गाः' इति शेषः । कषायवर्गो दशमूल्याद्याः । 'आम्लवर्गं समग्रं च कषाया मूलसंभवाः' ख; 'अम्लवर्गः समग्रश्च कषायमूत्रसंयुतः' ग. । ३ कर्कराः सुधापाषाणाः । ४ 'यतः (तिः) क्रोधापवर्जितः' ग. ॥

वस्त्राभरणसंयुक्तः पुष्पमालाविभूषितः ।
आचार्यः सर्वकर्मज्ञो रसकर्मणि शस्यते ॥ १९ ॥

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे द्रव्यसंग्रहाधिकारो नाम द्वितीयः पटलः ॥

---

## अथ तृतीयः पटलः ।

चतुर्विंशतिसंस्कारान् द्विगुणान् रसकर्मणि ।
विदित्वा साधकः पूर्वं, पश्चात्कर्म समारभेत् ॥ १ ॥
(१) रसोपरसशुद्धिं च(२)लोहशुद्धिं तथैव च ।
(३) सत्त्वानां द्रावणं चैव(४)स्थिरीकरणमेव च ॥ २ ॥
(५) द्रुतिपातं च सर्वेषां(६)रङ्गाकृष्टिं सुशोभनाम् ।
(७) रत्नानां लक्षणं चैव(८)द्रावणं च विशेषतः ।
(९) शोधनं सर्वधातूनां(१०)रत्नमेलापनं तथा ॥ ३ ॥
(११) बीजपाकं च सर्वेषां(१२)गर्भद्रुत्यवचारणम् ।
(१३) जारणं रसराजस्य(१४)द्रुतिमेलापनं तथा ॥ ४ ॥
(१५) रञ्जनं विधिसंयुक्तं(१६)रसराजस्य बन्धनम् ।
(१७) सारणं च तथा वक्ष्ये(१८)सूतराजस्य मारणम् ॥ ५ ॥
(१९) प्रतिसारणकं चैव(२०)क्रामणं च निगद्यते ।
(२१) वेध(२२)उद्घाटनं सम्यक्(२३)सुगुप्तो विक्रयस्तथा ॥६॥
एभिः कर्मान्तरैर्युक्तो वादिराजः स उच्यते ।
जारणा बहुधा ज्ञेया शतादिक्रमतो यथा ॥ ७ ॥
द्वन्द्वमेलं प्रवक्ष्यामि(२४)पिष्टिस्तम्भनमुत्तमम् ।
(२५) बन्धं निगडबन्धं च(२६)संकलीकरणं तथा ॥ ८ ॥
(२७) रसोपरसलोहानां कर्म विस्तरतस्तथा ।
(२८) रत्नानां शोधनं कर्म महदाश्चर्यकारकम् ॥ ९ ॥

---

१ 'रसकर्माणि योजयेत्' ग. । २ 'द्वन्द्वमारान्' ग. ॥

(२९) वङ्गदोषविनाशं च (३०) कालिकाविजयं तथा ।
(३१) बहुधा कल्कभेदांश्च (३२) विषाणां कर्म साधनम् ॥१०॥
(३३) मणिमूषाश्रयं कर्म (३४) दलादिकरणं तथा ।
(३५) गुटिकां कामधेन्वाख्यां(३६)वयःस्तम्भं च (३७)खेचरीम्
(३८) अनेकगुटिका दिव्या अदृश्यजनकारिणीः ।
(३९) अनेकक्रौञ्चयोगांश्च पक्षिणां कर्म शोभनम् ॥ १२ ॥
(४०) औषधीनां तथा वक्ष्ये कल्पभेदं सुशोभनम् ।
(४१) भूरिशो यन्त्रभेदांश्च(४२) मूषाबन्धान् वदाम्यहम् ॥१३॥
(४३) आयुधानि तथा वक्ष्ये रसराजस्य कर्मणि ।
(४४) खेदनं रसराजस्य रसायनमनुत्तमम् ॥ १४ ॥
(४५) मारणं सर्वधातूनां (४६) देहे संक्रामणं तथा ।
(४७) भोजनं विधिसंयुक्तं रसयुक्तस्य देहिनः ॥ १५ ॥
(४८) चर्या चैवं[1] नरेन्द्रस्य यथा सिद्धिमवाप्नुयात् ।
स्थानान्येतानि शास्त्रस्य वक्ष्यामि क्रमतो यथा ॥ १६ ॥
सुखेन येन जानन्ति साधकाः सिद्धिसाधनम् ।
अबुधप्रतिबोधाय रससारसमुच्चये[2] ॥ १७ ॥

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे अनुक्रमणिकाधिकारो नाम तृतीयः पटलः ।

---

## अथ चतुर्थः पटलः ।

अथातः संप्रवक्ष्यामि रसराजस्य शोधनम् ।
येन विज्ञातमात्रेण साधकाः कर्मकोविदाः ॥ १ ॥
नागदोषविनाशश्च वङ्गदोषविनाशनम् ।
कालिकाविजयश्चैव भूमिदोषविनाशनम् ॥ २ ॥

---

१ 'पूजां चैव रसेन्द्रस्य' ग. । २ 'रससारः समुच्यते' ग. ॥

अश्मकञ्चुकविध्वंसो वङ्गकापालिनाशनम् ।
कालिका नागसंभूता नागश्यामत्वनाशनम् ॥ ३ ॥
अव्यापिविजयश्चैव रसस्य वशकारकः ।
अतितीव्रकरश्चैव अतिनिर्मलकारकः ॥ ४ ॥
नागशङ्काजयश्चैव वङ्गशङ्काविनाशनम् ।
विषशङ्काविनाशश्च दर्पदोषविनाशनम् ॥ ५ ॥
उन्मत्तवशकारी च सूक्ष्मदोषविनाशनम् ।
मन्दवीर्यविनाशश्च षण्डदोषविनाशनम् ॥ ६ ॥
दीपनं रसराजस्य आयुर्वृद्धिकरं परम् ।
क्षुधाकरः परश्चैव वह्निस्थितिकरस्तथा ॥ ७ ॥
महासुखकरश्चैव अजीर्णस्य विनाशकः ।
व्योममेलापकश्चैव महाबलमवाप्नुयात् ॥ ८ ॥
बन्धनं च तथा ज्ञेयं यथा यन्त्रेषु तिष्ठति ।
धातुमेलापकश्चैव द्रुतिमेलापकस्तथा ॥ ९ ॥
रत्नमेलकरश्चैव रञ्जनस्य विधिस्तथा ।
रसबन्धकरश्चैव व्यापी चैव यथा रसः ॥ १० ॥
प्रवेशकरणं चैव रससंक्रामणं पुनः ।
वेधमात्रा तथा ज्ञेया वेधश्चैव निगद्यते ॥ ११ ॥
रङ्गसंख्या रसेन्द्रस्य वेध उद्घाटनं तथा ।
रसायनोपयोगश्च रसराजस्य सेवनम् ॥ १२ ॥
देहसंक्रामणं चैव रसमात्रानिषेवणम् ।
व्याधीनां निग्रहश्चैव क्रमादेते प्रकीर्तिताः ॥ १३ ॥

इति श्रीगोविन्दाचार्यविरचिते रससारे अष्टचत्वारिंशत्संस्कारो नाम चतुर्थः पटलः ।

## अथ पञ्चमः पटलः ।

एकविंशतिवारांश्च वाससो गालयेद्रसम् ।
नागवङ्गादयः किंचिद्वस्त्रे[1] तिष्ठन्ति धातवः ॥ १ ॥
ग्रहधूमेष्टिकाचूर्णदग्धोर्णागुडकाञ्जिकैः[2] ।
मर्दयेद्दिनमेकं तु मलहीनो भवेद्रसः ॥ २ ॥
दिनानि सप्त संपिष्टो वज्रीक्षीरेण पारदः ।
खर्जिकाक्षारयुक्तेन भूमिदोषो विनश्यति ॥ ३ ॥
टङ्कणक्षारसंयुक्तमर्कक्षीरेण योजयेत् ॥ ४ ॥
सप्ताहं मर्दयेत्सूतमश्मकञ्चुकनाशनम् ।
चित्रकद्रवसंपिष्टं टङ्कणेन समन्वितम् ।
कपाली वङ्गसंभूता नश्यते नात्र संशयः ॥ ५ ॥
वज्रकन्दरसेनैव नवसारयुतेन च ।
वङ्गदोषसमुद्भूता[3] कालिका नश्यति ध्रुवम् ॥ ६ ॥
टङ्कणेन कलांशेन कटुतुम्बीरसेन च ।
दिनानि सप्त संपिष्टो नागदोषं विमुञ्चति ॥ ७ ॥
बीजकक्काथसंपिष्टो रसेन निम्बुजेन च ।
कपाली[4] नागजा सूताद्गच्छत्येव न संशयः ॥ ८ ॥
नश्यते विषदोषस्तु चित्रकेणाश्वगन्धया ।
स्नुहित्रिफलयोः[5] क्वाथाद्दर्पदोषः प्रणश्यति ॥ ९ ॥
मीनाक्ष्यङ्कोलधत्तूरा[6] उन्मत्तवशकारकाः ।
त्रिकटुक्काथसंघर्षो सूक्ष्मदोषविनाशकः ॥ १० ॥

---

१ 'सर्वे वस्त्रे' ग. । २ 'गुडराजिकैः ख. । ३ 'नागदोषसमुद्भूता' ग. । ४ 'कपालिनागजो दोषो गलत्येव न संशयः' ग. । ५ 'नाहित्रिफलयोः' ख. 'त्रिफलायास्तथा' ग. । ६ 'मीनाक्षी चाङ्कुलश्चैव उन्मत्तवशकारकौ' ख. ॥

दुग्धिद्वयेन संघृष्टो व्यापी भवति निश्चितम् ।
काकमाचीरसेनैव निर्मलत्वमवाप्नुयात्[1] ॥ ११ ॥
औषधस्यौषधस्यान्ते क्षालयेत्काञ्जिकेन तु ।
मर्दनादि सदा कर्म कर्तव्यं पण्डितैरिति[2] ॥ १२ ॥

स्वेदनम् ।

अथातः स्वेदनं वक्ष्ये यथा तीव्रो भवेद्रसः ।
आयसे मृण्मये पात्रे स्वेदस्तत्र विधीयते ॥ १३ ॥
दिव्यौषधिकषायाम्लैः शिग्रुमूलैः सराजिकैः ।
लवणत्रिकटुक्षारैर्विषोपविषमूत्रकैः ॥ १४ ॥
कलांशमानैः कर्तव्यो मृद्वग्नौ स्वेदनो विधिः ।
एकविंशद्दिनैरेव ज्ञातव्यः सोऽतितीव्रकः ॥ १५ ॥

मर्दनम् ।

अनेनैव तु योगेन मर्दयेत्खल्वगं रसम् ।
एकविंशद्दिनैरेव शुद्धो भवति पारदः ॥ १६ ॥

मूर्च्छनम् ।

मूर्च्छनं रसराजस्य कर्तव्यं वादिभिः सदा ।
विषैस्त्रिफलया पूर्वं त्रिविषोपविषैस्तथा[3] ॥ १७ ॥
कर्कोटीक्षीरकन्दाभ्यां चित्रकैर्गृहकन्यया ।
एकैकेनापि संमर्द्य याममेकं तु पारदम् ॥ १८ ॥
किन्नरं यन्त्रमादाय औषध्या लेपयेत्तलम् ।
नवसारयुतं सूतं यन्त्रमध्यगतं न्यसेत् ॥ १९ ॥
दद्याद्रसोपरि श्रावं संधिलेपं दृढं मृदा ।
लवणेन च संपूर्य द्वारं संरुध्य यत्नतः ॥ २० ॥
चुल्लिकोपरि संस्थाप्य दीपाग्निं ज्वालयेत्सुधीः ।
यामैकाच्च समुत्तार्य कर्तव्यः शीतलो रसः ॥ २१ ॥

---

१ 'रसो बन्धमवाप्नुयात्' क.; 'रसो वशमवाप्नुयात्' ग.। २ 'पण्डितैर्धिया' ग.। ३ 'बृहत्योपविषैस्तथा' ग.॥

उत्थापनम् ।

यन्त्रादुद्धृत्य यत्नेन सूतमुत्थाप्य मूर्च्छितम् ।
अमूर्च्छितस्तदा देयः कलांशैर्मूर्च्छिते रसे ॥ २२ ॥
सिन्धूत्थटङ्कणाभ्यां च मर्दयेन्मधुसंयुतम् ।
दोलायन्त्रे ततः स्वेद्यः क्षाराम्ललवणैः सह ॥ २३ ॥
उत्थाप्य मूर्च्छयेत् पश्चात् वारंवारं रसेश्वरम् ।
पुनरुत्थापितं कुर्यादेकविंशतिवारतः ॥ २४ ॥
अथवा चक्रयन्त्रेऽपि मूर्च्छितः क्रियते रसः ।

पातनम् ।

अथातः संप्रवक्ष्यामि पातनं च यथाविधि ॥ २५ ॥
द्वौ भागौ शुद्धसूतस्य शुल्वभागैकसंयुतौ ।
त्रिंशांशं लवणं दत्त्वा पिष्टीं कुर्याच्च सुन्दराम् ॥ २६ ॥
कटाहं चिप्पटं ग्राह्यं तद्बुध्ने लेपयेद्रसम् ।
द्विगुणेन सुवस्त्रेण जडयेद्बुध्नकादधः ॥ २७ ॥
वस्त्रान्तरे रसं लिप्त्वा सजलस्थालिकोपरि ।
स्थालीकटाहयोः सन्धिं लेपयेत्सुदृढं मृदा ॥ २८ ॥
कटाहोपरि कर्तव्यं रसराजस्य पातनम् ।
शुल्वपिष्टीं तथा कुर्यादूर्ध्वमग्निरधो जलम् ॥
जलमध्ये रसो याति शुल्वं तिष्ठति बुध्नके ।
शुल्वाद्रसो रसात्ताम्रं पातनेन पृथक्कृतम् ॥ २९ ॥
पुनः पिष्टी प्रकर्तव्या क्षिप्त्वाऽम्लं ताम्रसंयुतम् ।
प्रक्षाल्य तत्प्रयत्नेन स्थापयेत्स्थालिमध्यतः ॥ ३० ॥
स्थालीमधोमुखीमन्यां दत्त्वा तल्लेपयेन्मुखम् ।
उपरिस्थालिकाबुध्ने दातव्यं गोमयं शकृत् ॥ ३१ ॥
चूल्ह्यां संस्थाप्य यत्नेन दीप्ताग्निं ज्वालयेत्ततः ।
उड्डीय सूतस्तल्लग्न ऊर्ध्वपात्रस्य बुध्नके ॥ ३२ ॥

याममेकं तु कर्तव्यं ऊर्ध्वपातनमुत्तमम् ।
यन्त्रो डमरुकः ख्यातः पातने परमो मतः ॥ ३३ ॥
यन्त्रादुद्धृत्य यत्नेन क्षाराम्लैः स्वेदयेत्ततः ।
पुनः पिष्टीं प्रकुर्वीत पात्यं स्वेद्यं पुनः पुनः ॥ ३४ ॥
त्रिसप्तकमिदं प्रोक्तं श्रेष्ठं पातनमूर्ध्वगम् ।
अथवा चक्रयन्त्रेण ऊर्ध्वपातनमुत्तमम् ॥ ३५ ॥
नागवङ्गसमुद्भूता शङ्काऽपि नश्यति ध्रुवम् ।

बोधनम् ।

अथातः संप्रवक्ष्यामि वीर्यवान् जायते यथा ॥ ३६ ॥
आदाय शिग्रुमूलानि राजिकां कटुकान्विताम् ।
आरनालेन संपिष्ट्वा कृत्वा पिण्डेन कुल्हडीम् ॥
नवसारं कलांशेन दत्त्वा सूतं विमर्दयेत् ।
नवसारसमायुक्तं रसं तस्यां विनिक्षिपेत् ॥ ३७ ॥
चतुर्गुणेन वस्त्रेण बध्नीयात्पोटलीं ततः ।
निंबूकस्य रसं क्षिप्त्वा जम्बीररससंयुतम् ॥ ३८ ॥
चूर्णं च सर्जिकावारि चिञ्चाद्रावं तु काञ्जिकम् ।
स्थालीमध्ये क्षिपेत्तं च कण्ठे काष्ठं विमुञ्चयेत् ॥ ३९ ॥
काष्ठे च पोटलीं बद्ध्वा काञ्जिकं च स्पृशेद्यथा[1] ।
द्वारे च मल्लकं दत्त्वा ज्वाल्यो वह्निरहर्निशम् ॥ ४० ॥
काञ्जिकं प्रक्षिपेत्तत्र क्षीणे क्षीणे पुनः पुनः ।
प्रत्यहं नूतनं पिण्डं कुर्यात्तेनैव कुल्हडीम् ॥ ४१ ॥
नवसाररसं क्षिप्त्वा बध्नीयात्पोटलीं ततः ।
दोलास्वेदः प्रकर्तव्य एकविंशद्दिनावधि ॥ ४२ ॥
स्वेदितः सूतराजस्तु ततो बलमवाप्नुयात् ।
छागमूत्रं तु संगृह्य वानरीं च बलात्रयम् ॥ ४३ ॥

---

१ 'काञ्जिकं न' क ॥

क्षाराम्लेन च संयुक्तं कान्ते[1] च खेदयेद्रसम्।
एकविंशद्दिने पूर्णे षण्ढत्वं नश्यति ध्रुवम्॥ ४४॥
काकविष्ठादिभिः पित्तैः शुक्रशोणितचित्रकैः।
जपाशिग्रूर्ध्वमालाभिर्मर्दयेद्दीपनौषधैः॥ ४५॥
मृण्मयीं कुण्डिकां कृत्वा मध्ये स्थण्डिलसंयुताम्।
जलं तत्र विनिक्षिप्य स्थापयेत् स्थण्डिले रसम्॥४६॥
स्थण्डिलात्परितः क्षिप्तं जले पतति सूतकः।
त्रिसप्तवारं कर्तव्यं चक्रे वा दीपनं परम्॥ ४७॥
इति दीप्तो यदा सूतो विद्युत्कान्तिसमप्रभः।
मीनाक्षीभुजगाक्षिभ्यां बलात्रयेण संयुतम्॥ ४८॥
बिम्बीकृत्तदलाभ्यां च गिरिकर्ण्या[2] समन्वितम्।
सप्ताहमम्लवर्गैश्च कान्तपात्रे पचेद्रसम्॥ ४९॥
बुभुक्षितो भवेत्सूतः पश्चात्तं च नियामयेत्।

अथ नियमनम्।

रक्तसैन्धवव्योषैश्च मूषाद्वयं तु कारयेत्॥ ५०॥
तत्संपुटे रसं क्षिप्त्वा नवसारं सनिम्बुकम्।
तत्संपुटे प्रयत्नेन लेपयेत्सन्धिमुत्तमम्॥ ५१॥
मृत्तिकावस्त्रमादाय वेष्टयेत्तत्प्रयत्नतः।
छायाशुष्कं हि तत्कृत्वा भूगर्भे स्थापयेत्ततः॥ ५२॥
अष्टाङ्गुलप्रमाणेन मूषोर्ध्वं गर्तपूरणम्।
त्रिसप्तदिनपर्यन्तं करीषाग्निं च कारयेत्॥ ५३॥
दिने दिने प्रकर्तव्या मूषा सैन्धवनूतना।
स्वेदयेत्तु प्रयत्नेन भूगर्भे स्थापयेत्पुनः॥ ५४॥
अथातः कूपिकामध्ये सूतं सैन्धवसंयुतम्।

---

१ कान्ते कान्तलोहमये पात्रे। २ 'गह्वोडीडिण्डिरीबिम्बीगिरिकर्णीबृहत्फला' ख.।

भूगर्भे च ततः स्थाप्यं एकविंशद्दिनावधि ॥ ५५ ॥
अयं नियामको नाम वह्निमित्रत्वकारकः ।

अथ निरोधनम् ।

काचकूपीं मृदाऽऽवेष्ट्य रसं मध्ये विनिक्षिपेत् ॥ ५६ ॥
कलांशं टङ्कणं दत्त्वा मद्यं किंचित्प्रदीयताम् ।
द्वारे मुद्रा प्रदातव्या वज्रमृत्तिकया दृढम् ॥ ५७ ॥
भूगर्भे कूपिकां स्थाप्य स्मृत्स्नया गर्तपूरणम् ।
करीषाग्निः प्रकर्तव्य एकविंशद्दिनावधि ॥ ५८ ॥
अयं निरोधको नाम महासुखकरः परः ।
निरोधः सूतरजस्य त्वजीर्णस्य निषेधकः ॥ ५९ ॥
स्वेदनं रसराजस्य क्षाराम्लैर्विषमद्यकैः ।
उत्तार्य बीजपूरस्य वृन्तं कृत्वा सरन्ध्रकम् ॥ ६० ॥
तस्य मध्ये क्षिपेत्सूतं कलांशक्षारसंयुतम् ।
द्वारं निरुध्य यत्नेन वस्त्रेण[1] परिबन्धयेत् ॥ ६१ ॥
दोलास्वेदः प्रकर्तव्य एकविंशद्दिनावधि ।
दिने दिने प्रकर्तव्यं नूतनं बीजपूरकम् ॥ ६२ ॥
लेलिहानो हि धातूंश्च पीड्यमानो बुभुक्षया ।
[2]अनेनैव प्रकर्तव्यं रसराजस्य शोधनम् ॥ ६३ ॥
त्र्यहं सप्तदिनं वाऽथ चतुर्दशैकविंशतिः ।
[3]संस्कारः सूतराजस्य क्रमात्क्रमतरं वरम् ॥ ६४ ॥
आदौ किंचित्प्रदातव्यं काञ्चनं सुखहेतवे ।
ॐ नमो [4]मृतलोहाय परमा[5]मृतोद्भवाय स्वाहा ॥ ६५ ॥
इति चारणजारणमन्त्रः ।

---

१ 'वस्त्रमध्ये निबन्धयेत्' ख. ग. । २ 'अमुनैव' ख. ग. ३ 'संस्काराः सूतराजस्य क्रमात्तत्क्रमणं वरम्' ख. । ४ 'अमृतलोहाय' ख. । ५ 'परमामृतरसोद्भवाय' ग. ।

सर्वजन्तूपकाराय महासिद्ध्यर्थमात्मनः।
जारणं कर्तुकामोऽहं ग्रासं गृह्ण मम प्रभो ॥ ६६ ॥
खल्वश्च पिण्डिका ज्ञेया रसेन्द्रो लिङ्गमुच्यते।
मर्दनं चन्दनं प्रोक्तं ग्रासः पूजा विधीयते ॥ ६७ ॥
दिनमेकं रसेन्द्रस्य यः करोति हुताशनम्।
विलयं यान्ति पापानि कुर्वन्नपि न लिप्यते ॥ ६८ ॥
[1]शतं पलानि संगृह्य रसस्य रसकर्मणि।
षोडशांशयुतेनापि साधयेत्साधकोत्तमः ॥ ६९ ॥

इति श्रीगोविन्दाचार्यविरचिते रससारे रसशोधनसंस्काराधिकारो नाम पञ्चमः पटलः ॥

---

## अथ षष्ठः पटलः।

अथातः संप्रवक्ष्यामि रसोपरसशोधनम्।
[2]अम्लैः क्षारैश्च मूत्रैश्च कुलित्थक्वाथसंयुतैः ॥ १ ॥
रसांश्च स्वेदयेत्पूर्वं यावत्सप्तदिनावधि।
वैक्रान्तं सस्यकं ताप्यं दरदो रसको गिरिः ॥ २ ॥
वि[3]मलं कान्तकश्चैव स्वेदा[4]च्छुध्यन्ति नान्यथा।
शुध्यन्त्युपरसाः स[5]र्वे कुर्यात्सत्त्वनिपातनम् ॥ ३ ॥
अम्लैः क्षारैश्च रक्तैश्च निर्गुण्डीरससंयुतैः।
निषेकस्तेषु कर्तव्यो ढालस्ते[6]षु पुनः पुनः ॥ ४ ॥
शुध्यन्ति धातवः सर्वे दोषहीना भवन्ति च।
एवं शुद्धिः पुनः स्वेदो रसेषूपरसेषु च ॥ ५ ॥
मूत्रस्नेहवसादुग्धैरेकविंशद्दिनावधि।
तथा रसा विमुञ्चन्ति सत्त्वं चैव सुनिर्मलम् ॥ ६ ॥

---

१ 'ग्रासोपलादि' ख.। २ 'आम्लैः क्षारैश्च रक्तैश्च कुलित्थक्वाथमूत्रकैः' क.। ३ 'रसकः' ग.। ४ 'स्वेदाच्छुद्धिमवाप्नुयुः' ग.। ५ 'पूर्वं' ख.। ६ 'ढालस्तेषां' ख. ग.।

गुडगुग्गुलुलाक्षाभिः पञ्चमाहिषटङ्कणैः ।
बध्नीयात्[1]पिण्डिकामेभिः सत्त्वमोक्ष[2]विधौ ध्रुवम् ॥ ७ ॥
वैक्रान्तं सस्यकं ताप्यं[3]काचोऽभ्रं विमलं गिरिः ।
गैरिका [4]तुत्थकं चैव राजावर्तो विशेषतः ॥ ८ ॥
[5]एषांमुपरसानां च कोष्ठे सत्त्वनिपातनम् ।
नानाक्षेत्रसमुद्भूताः पाषाणा [6]धातुसंज्ञकाः ॥ ९ ॥
पिण्डीं बद्ध्वा द्रवन्त्याशु [7]सर्वे जार्या रसेश्वरे ।
ध्माताः सत्त्वं विमुञ्चन्ति वक्रनालद्वयेन च ॥ १० ॥
विज्ञाय पतितं सत्त्वं गृहीत्वा [8]तद्धरेत्पुनः ।
[9]दुग्धादिस्नेहरक्तैश्च कर्तव्यं सिञ्चनं तथा ॥ ११ ॥
यदा सत्त्वं भवेच्छुद्धं सेचनं च विवर्जयेत् ।
नागं त्रिगुणमुत्तार्य सत्त्वं शुद्धं भवेत्तदा ॥ १२ ॥
भूनागस्यापि कर्तव्यः सत्त्वार्थं विधिरेष वै ।
कान्तस्यान्यो विशेषः स्यात् ज्ञातव्यः क्रमकोविदैः १३
कान्तं शुद्धं पुरा कृत्वा छागरक्तेन भावयेत् ।
पिण्डीं बद्ध्वा प्रयत्नेन कोष्ठे [10]सत्त्वं निपातयेत् ॥ १४ ॥
धात्रीविभीतकाङ्गारैः सत्त्वं पतति शोभनम् ।
चौरं शुद्धं पुरा कृत्वा ततो मूषां प्रपूरयेत् ॥ १५ ॥
पलेन पूर्यते मूषा कर्तव्या शोभना दृढा ।
द्वारं निरुन्ध्य यत्नेन द्वारनालं दशाङ्गुलम् ॥ १६ ॥

---

१ 'बध्नीयाद्वटिकामेभिः' ख. । २ 'सत्त्वपातनहेतवे' ख. ग. । ३ 'कान्ताभ्रे' ख. । ४ 'तुत्यकासीसं' ख. । ५ 'एतेषामञ्जनानां' ख. ग. । ६ 'क्षेत्रसंभवाः' क. ख. । ७ 'सत्त्वं जार्यं' ग. । ८ 'तद्धमेत्' ग. । ९ 'द्रवपूर्वस्नेहरक्तैः कुलित्थस्वेदनं तथा' क. ग. । अयं श्लोकः ख. पुस्तके नोपलभ्यते । १० 'सत्त्वनिपातनम्' ख. ग. ।

सजले[1] लघुकोष्ठे च मूषैकैका भवेत्ततः ।
दद्यात्खर्परिकां नाले यथोड्डीय न गच्छति ॥ १७ ॥
अङ्गारत्रितयादूर्ध्वं मुखेनालं[2] विशोषयेत् ।
एकैकाङ्गारके[3] शान्ते सत्त्वं ग्राह्यं पुनः पुनः ॥ १८ ॥
धमेन्मन्द[4]दृढाङ्गारैर्यावदङ्गारसप्तकम् ।
एवं मूषा प्रकर्तव्या मणेनैकेन विंशतिः ॥ १९ ॥
मणमध्यात्पतेत्सत्त्वं पलत्रितय[5]संमितम् ।
हिङ्गुलं च शिला काङ्क्षी कासीसं तालकस्तथा ॥ २० ॥
एतेषामेव सर्वेषां कूपे सत्त्वं निपात्यते ।
शिलां च तालकं चैव स्वेदयित्वा च पूर्ववत्[6] ॥ २१ ॥
ताले[7] च शम्बुकक्षारं समभागं तु मर्दयेत् ।
दृढां स्थालीं समादाय तालकं तत्र निक्षिपेत्[8] ॥ २२ ॥
सच्छिद्रं मल्लकं दत्त्वा[9] सन्धिं लिम्पेद्दृढं मृदा ।
सूक्ष्मच्छिद्राद्विनिष्क्रान्तो यथा धूमश्च गच्छति ॥ २३ ॥
चुल्यां संस्थाप्य यत्नेन ततो वह्निं प्रकारयेत् ।
निर्धूमे मल्लके जाते मुद्रां दद्यात्तदूर्ध्वतः ॥ २४ ॥
हठवह्निः प्रकर्तव्यो यावद्यामचतुष्टयम् ।
स्वाङ्गशीतं तदुत्तार्य[10] सत्त्वं प्रक्षाल्य यत्नतः ॥ २५ ॥
गृहीत्वा तत्र लग्नं तु सत्त्वं खल्वे विमर्दयेत् ।
टङ्कणक्षारसंयुक्तं काचकूपे[11] निधापयेत् ॥ २६ ॥
हस्तमात्रं प्रकर्तव्यं यन्त्रं चक्राकृति शुभम् ।
चुल्लिकोपरि संस्थाप्य सन्धिलेपं तु कारयेत् ॥ २७ ॥

---

१ 'सनाले लघुकोष्ठे च मूषैकैकां धमेत्ततः' ग. । २ 'मुखानां च विशोषयेत्' ग. । 'मूषानालं' ख. । ३ 'एकैकाङ्गारकस्यान्ते' ग. । ४ 'धमेन्महादृढाङ्गारैः–' ख. 'मध्यमन्ददृढाङ्गारैः–' ग. । ५ 'पलद्वितय–' ग. । ६ 'पूर्वतः' ख. । ७ 'तालं' ख. । ८ 'तालस्तत्र विमुच्यते' ख. ग. । ९ 'दत्त्वा' ग. । १० 'समुत्तार्य' ग. । ११ 'काचकूप्यां विनिक्षिपेत्' ख. ।

इत्थं शुद्धिमवाप्नोति[1] गन्धको नात्र संशयः ।
अयश्चूर्णं तुरीयांशं दत्त्वा यन्त्रे स्थिरीकुरु ॥ ३९ ॥

इति श्रीगोविन्दाचार्यविरचिते रससारे रसलोहशुद्धिसत्त्वपातनाधिकारो नाम षष्ठः पटलः ॥

---

## अथ सप्तमः पटलः ।

चोरहंसशिलाकाङ्क्षीकासीसा अलयस्तथा ।
एषामस्थिरसत्त्वानां स्थिरीकुर्याद्विचक्षणः ॥ १ ॥
दग्धात्तुषात्तु भागैकं मृदो भागद्वयं तथा ।
किंचित्कार्पासकं दत्त्वा कुट्टयेन्मृत्तिकां दृढम् ॥ २ ॥
मृत्पोलिकां[2] ततः कृत्वा बुद्ध्वा[3] विस्तार्य यत्नतः ।
बुध्ने मृदधिका कार्या वेष्टयेत्कूपिकां ततः ॥ ३ ॥
यत्नेन वेष्टितां कूपीं छायायां शोषयेत्ततः ।
अञ्जनं तीक्ष्णसंयुक्तं तत्समं टङ्कणं कुरु ॥ ४ ॥
अन्धमूषागतं ध्मातं वरनाग इति स्मृतः ।
चौरभागचतुष्कं तु वरनागैकसंयुतम् ॥ ५ ॥
तत्सर्वं[4] रेतयित्वा तु रक्तवर्गेण भावयेत् ।
सूर्यतापेन संशोष्य काचपात्रे निधापयेत् ॥ ६ ॥
वैश्वानरः प्रदातव्यो[5] वर्धमानो ह्यहर्निशम् ।
स्वाङ्गशीता यदा कूपी यत्नाच्चां[6] स्फोटयेत्तदा ॥ ७ ॥
अत[7] ऊर्ध्वं च तल्लग्नमेकीकृत्वा च मर्दयेत् ।
भावयेद्रक्तवर्गेण काचकूप्यां निधापयेत् ॥ ८ ॥
तावदेवं[8] प्रकर्तव्यं यावत्सत्त्वं स्थिरं भवेत् ।
स्थिरीभूतं यदा सत्त्वं स्वेदयेज्जलयन्त्रगम् ॥ ९ ॥

---

१ 'इति स्नेहमवाप्नोति' ख. । २ 'मृत्पोटलीं' ख. । ३ 'बद्ध्वा' ख. । ४ 'तत्समं' क. ख. । ५ 'प्रकर्तव्यो' ग. । ६ 'यत्नतः' ग. । ७ अध ऊर्ध्वं च यल्लग्नं तदेकीकृत्य' ग. । ८ 'तावदेतत्' ग. ।

रसको बन्धमाप्नोति नात्र कार्या विचारणा।
सप्तरात्रमिदं कार्यं सत्त्वबन्धनमुत्तमम् ॥ १० ॥
एवं स्थिरत्वमन्येषामस्थिराणां च चौरवत्।
अभावे वरनागस्य लोहचूर्णेन कारयेत् ॥ ११ ॥
अमुनैव प्रकर्तव्यं स्थिरत्वं गन्धकस्य च।
अथवा गन्धकं शुद्धं नवसारसमन्वितम् ॥ १२ ॥
रक्तवर्गेण संभाव्य चक्रयन्त्रे स्थिरीकुरु।
अस्थिराण्यपि सर्वाणि स्थिरत्वं प्राप्नुवन्ति हि ॥ १३ ।
स्थिरीकरणमाख्यातं चक्रराजे सुशोभने।
अन्ये च ये विंडाः[1] ख्याताः श्रेष्ठाश्चारण[2]कर्मणि ॥ १४।
तेषां च चक्रयन्त्रेण स्थिरत्वं कारयेद्बुधः।

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे सत्त्वस्थिरीकरणाधिकारो नाम सप्तमः पटलः ॥

---

## अथाष्टमः पटलः।

अथातः संप्रवक्ष्यामि द्रुतिपातनमुत्तमम्।
रसोपरससत्त्वानां संक्षेपाल्लोहजं तथा ॥ १ ॥
वैक्रान्तसत्त्वचूर्णं तु पादांशौ रसगन्धकौ।
पादांशं नवसारं च सर्वमम्लेन मर्दयेत् ॥ २ ॥
शरावसंपुटे क्षिप्त्वा सन्धिं लिप्त्वा पुटेल्लघु।
स्वाङ्गशीतं तु तच्चूर्णं क्षारोदकविभावितम् ॥ ३ ॥
कूपीमध्ये विनिक्षिप्य मध्वा[3]म्लेन समन्वितम्।
कूपिकां पूरयेन्नूनं चर्मणा बन्धयेन्मुखम्[4] ॥ ४ ॥

---

१ 'अन्ये पिण्डा च ये ख्याता' ग.। २ 'जारणकर्मणि' ख.। ३ 'मद्याम्लेन' ख.। 'मध्वाज्येन' ग.। ४ 'पूरयित्वा तु मुखे चर्म निबध्यते' ग.।

जानु[1]मात्रं खनित्वा तु लद्दिं तत्र प्रपूरयेत् ।
विनिक्षिपेत्तत्र कूपीं लद्दिना गर्तपूरणम् ॥ ५ ॥
नूत[2]नं त्रिदिनादूर्ध्वं लद्दिना गर्तपूरणम् ।
चत्वारिंशद्दिने पूर्णे द्रुतिर्भवति शोभना ॥ ६ ॥
स्थालीमध्ये द्रु[3]तिं मुक्त्वा घर्मेण शोध(१)येज्जलम् ।
द्रुतिर्भवति सर्वेषां सर्वकर्मसु पूजि[4]ता ॥ ७ ॥
लवणक्षारमूत्राणि क्षाराश्चौषधिसंभवाः ।
एते क्षारा रसाश्चैव औषधीकन्दसंभवाः ॥ ८ ॥
यश्चान्यो द्रावकः कल्कः फलत्रयकटुत्रयम् ।
शिलाधातुः शिलामेदः शैलं सौवीरमञ्जनम् ॥ ९ ॥
काङ्क्षीगन्धककासीसमयस्कान्तश्च भूलता ।
इन्द्रगोपकमण्डूकौ द्विमुखी मत्स्यसंयुता ॥ १० ॥
कुलित्थकाथतोयं च सर्वं मृद्वग्निना पचेत् ।
गालयेद्वस्त्रयोगेन पुनः पाकं च कारयेत् ॥ ११ ॥
गगनं सर्वलोहानि चूर्णं कृत्वा विभावयेत् ।
एकविंशतिवारांश्च भावयित्वा विशोषयेत् ॥ १२ ॥
लद्दिमध्ये तु भूगर्ते धान्यराशौ च भास्करे ।
सप्ताहं धारयेत्तं तु दोलायां स्वेदयेत्त्र्यहम् ॥ १३ ॥
द्रुतिर्भवति सर्वेषां सूत[5]रूपा सुशोभना ।
अनेनैव तु रत्नानि मृतानि द्रुतिमाप्नुयुः ॥ १४ ॥
श्वेताभ्रकं च संचूर्ण्य मुनिपुष्पेण भावयेत् ।
नष्टपिष्टं ततः कृत्वा एकविंशद्दिनावधि ॥ १५ ॥
आ[6]नीय सूरणं कन्दं तस्य मध्ये विमोचयेत् ।
धान्यराशौ तु संस्थाप्य मासमेकं तु साधकः ॥ १६ ॥

---

१ 'हस्तमात्रं' ग. । २ 'त्रिदिनात्त्रिदिनादूर्ध्वं नूतनं लद्दिपूरणम्' ग. । 'उद्धृत्य त्रिदिनादूर्ध्वं नूतनं लद्दिपूरणम्' ख. । ३ 'रसं' क. ख. । ज्यते' ख. ग. । ५ 'सुखरूपा' ख. । ६ 'नूतनं' ख. ग. ।

तस्मादुद्धृत्य संग्राह्य वटदुग्धेन भावयेत् ।
संस्थाप्य भाण्डयोगेन द्रुतिर्भवति निश्चितम् ॥ १७ ॥
श्वेताभ्रकं च संचूर्ण्य गोमूत्रेण विभावयेत् ।
कदलीफलसंयुक्तं भावयेत्तद्विचक्षणः ॥ १८ ॥
धमेत्तदन्धमूषायां त्रिवारं च पुनः पुनः ।
द्रुतिर्भवति तद्वज्रं नात्र कार्या विचारणा ॥ १९ ॥
काकमाचीबीजचूर्णेनाभ्रचूर्णं समं कृतम् ।
भावितं वज्रदुग्धेन धमनाद्द्रुतिमाप्नुयात् ॥ २० ॥
रक्तोत्पलेन संयुक्तं धमनाद्द्रुतिमाप्नुयात् ।
वज्रवल्लीरसेनैव सौवर्चलसमन्वितम् ॥ २१ ॥
शरावसंपुटे पक्वं मूषायां द्रुतिमाप्नुयात् ।
अभ्रकं नरतैलेन भावितं च पुनः पुनः ॥ २२ ॥
तेनालेपितमूषायां धमनाद्द्रुतिमाप्नुयात् ।
पक्वधात्रीफलरसैर्लोहं द्रुतिमवाप्नुयात् ॥ २३ ॥
इन्द्रगोपककर्पूरं वसा मण्डूकसंभवा ।
रुधिरं कोकिलानां च हेम्नि वापाद्द्रुतिर्भवेत् ॥ २४ ॥
देवदाल्या रसेनैव गन्धाश्मानं विभावयेत् ।
पञ्चाशद्भावना कार्या शोषयित्वा पुनः पुनः ॥ २५ ॥
भावयित्वा पुनर्गन्धं काकमाच्या रसेन च ।
गन्धकं प्रक्षिपेद्धेम्नि गालिते पञ्चमांशकम् ॥ २६ ॥
त्रिवारं क्रियतामाशु द्रुतिर्भवति शोभना ।
कञ्चुकीकन्दचूर्णं तु कञ्चुकीरसभावितम् ॥ २७ ॥
वापनात्सेचनाद्धातोर्ढालनाद्द्रावणं भवेत् ।
कृष्णागरुसितानाभिजलशूकं सरामठम् ॥ २८ ॥

---

१ 'शैलाभ्रकं' क. । २ 'तद्वच्च' ख. । ३ 'मूषया द्रुतिपातनम्' क. । ४ 'वज्रवल्लीरसं व्योम' ख. । ५ 'वरतैलेन' ख. । ६ 'हेमि' ख. । ७ 'चारणात्पचनाद्द्राऽथ ज्वालनाद्द्रावणं भवेत्' ग. ।

जलं[1] समुद्रतोयं च छत्राम्बरसमन्वितम् ।
लवण[2]क्षारसंयुक्तं भावयेदेकविंशतिः ॥ २९ ॥
लेपयेद्धेमपत्राणि रवितापे द्रुतिर्भवेत् ।
द्रवन्ति सर्वलोहानि रसरूपा[3] द्रुतिर्भवेत् ॥ ३० ॥
आदौ धान्याभ्रकं कृत्वा स्वेदयेद्दिनविंशतिः ।
स्नेहं[4]दुग्धवसामूत्रैरम्लैः क्षारैर्विधीयते ॥ ३१ ॥
पश्चाद्द्रुतिः प्रकर्तव्या अन्यथा नैव जायते ।
धूर्तभल्लातकालिङ्गबिभीताङ्कोल्लसंभवम् ॥ ३२ ॥
ज्योतिष्मत्यास्तिलानां च बाकुच्यतसिसंभवम् ।
तुम्बीपलाशजं तैलं कटुतैलं च राजिकम् ॥ ३३ ॥
देवदाली[5]करञ्जानामेरण्डकटुनिम्बजम् ।
गृहीत्वा सर्वतैलानि यथाप्राप्तानि साधकः ॥ ३४ ॥
महिषाजगजाश्वानां मण्डूकनरसंभवा ।
खरोष्ट्रजम्बुकादीनां नखिनां च विशेषतः ॥ ३५ ॥
शिशुकमत्स्यसंभूता वसा ग्राह्या च साधकैः ।
पित्तान्येषां सरक्तानि रक्तवर्गेण योजयेत् ॥ ३६ ॥
मञ्जिष्ठा द्वे रजन्यौ च कौसुम्भं रक्तचन्दनम् ।
पत्राङ्गं रक्तनिर्गुण्डी शाककूर्प[6]लिकद्रवः ॥ ३७ ॥
शिरीषशाल्मलीपुष्पं महेन्द्रीपत्रजो रसः ।
जपाकिंशुकपुष्पाणि धातकीकुसुमानि च ॥ ३८ ॥
अक्षीवः शालिमूलं च नारङ्गं दाडिमत्वचः ।
पूगीखदिरजौ क्राथौ नागवल्लीदलानि च ॥ ३९ ॥

---

१ 'क्षारं' ग.। २ 'लोणक्षाराम्लसंयुक्तं' ख.; 'क्षाराम्लजलसंयुक्तं' ग.।
३ 'सूतरूपा' ग.। ४ 'स्नुहिदुग्ध–' ग.। ५ 'क्रौञ्चजालिकरञ्जानां' ग.।
६ कूपलिकाः शुङ्गाः।

टङ्कणं[1] पद्मकन्दश्च नीलं[2] नीली च बीजकः ।
पैनसं[3] त्रिफला बिल्वं पक्काम्रजम्बुजो रसः ॥ ४० ॥
अन्यानि रक्तपुष्पाणि पीतकृष्णानि यानि च ।
क्राथो वा चूर्णमेषां वा रक्तवर्ग इति स्मृतः ॥ ४१ ॥
रक्तवर्गस्य भागैकमष्टौ भागान् जलस्य च ।
अष्टावशेषं कृत्वा तु क्राथं वस्त्रेण पीडयेत् ॥ ४१ ॥
तस्य क्राथस्यैकभागो भागस्तैलाच्च तत्समः ।
पित्तानि रक्तयुक्तानि ताम्रे मृद्वग्निना पचेत् ॥ ४२ ॥
क्राथादिकं च संशोष्य शुद्धतैलं समुद्धरेत् ।
रञ्जनेषु प्रयोक्तव्यं सारणेषु विशेषतः ॥ ४३ ॥
बीजपाकेषु सर्वेषु सेचनीयं मुहुर्मुहुः ।
अम्लवर्गं तथा वक्ष्ये सर्वकर्मसु साधकम् ॥ ४४ ॥
अम्लवेतसजम्बीरबीजपूरकनिम्बुकम् ।
चिञ्चाकरमदाम्रातमाम्रामलकदाडिमम् ॥ ४५ ॥
अन्याम्लानि च सर्वाणि मद्यानि च विशेषतः ।
सर्वधान्यसमुद्भूतं काञ्जिकं च तुषाम्बुकम्[4] ॥ ४६ ॥
यवकोद्रववर्ज्यं[5] च प्रशस्तं चणकाम्लकम् ।
रक्तवर्गाम्लवर्गौ च सर्वकर्मसु योजयेत् ॥ ४७ ॥
अहिमारमपामार्गं तण्डुलीयकमङ्कुलम् ।
स्नुह्यर्ककरवीरं च लाङ्गलीक्षीरकन्दकौ ॥ ४८ ॥
कर्कोटीं कञ्चुकीं तुण्डीं पालाशं चाग्निमन्थकम् ।
करीरं चित्रकं शिग्रुं वरुणं वेतसं वटम् ॥ ४९ ॥
पटोलार्जुनकूष्माण्डीकदलीवज्रकन्दकम् ।
अश्वत्थं सूरणं जालिं दहेत्कन्दाननेकशः ॥ ५० ॥

---

१ 'इशुणः' क. । 'दमणः' ख. 'उषकः' ग. । २ 'नीली नलिनीबीजकम्' ग. । ३ 'त्रिफलामलकीत्वक्च पक्वबिम्बीफलद्रवः' क. । ४ 'तुषजातयः' क. ख. । ५ 'एतत्कोद्रववर्ज्यं च प्रशस्तं यवकाञ्जिकम्' ख. ।

अन्तर्धूमेन सर्वांश्च देवदालीं दहेदिति ।
औषधीक्षारनामाऽयं गणस्तु परिकीर्तितः ॥ ५१ ॥
क्षारोऽयं द्रावणे योज्यः स्वेदने च विशेषतः ।
बिडान्यन्यानि वक्ष्यामि क्षारांश्च लवणानि च ॥ ५२ ॥
स्वर्जिकाचूर्णभागैकं त्रिंशद्भागान् जलस्य च ।
तावत्काथं पचेद्भाण्डे यावत्फेनः सितो भवेत् ॥ ५३ ॥
क्षीणे क्षीणे[1] जलं दत्त्वा श्वेतः फेनश्च गृह्यते ।
तं फेनं देगयन्त्रेण द्रावयेदग्नियोगतः ॥ ५४ ॥
त्रिसप्तवारं कर्तव्यं द्रावणं मूत्रसंयुतम् ।
सूचिका[2]क्षारनामाऽयं द्रावणे परमो मतः ॥ ५५ ॥
सौवर्चलं यवक्षारं नवसारं च सैन्धवम् ।
गजादिपशुमूत्रोत्थं शाकम्भरं च सागरम् ॥ ५६ ॥
एकविंशतिवारांश्च द्रावयेद्देगयन्त्रके[3] ।
क्षारद्रावः प्रदातव्यः सर्वकर्मसु साधकैः ॥ ५७ ॥
स्थिरीकृत्वा पुरा क्षारान् द्रावयेत्तदनन्तरम् ।
द्रवन्ति सर्वलोहानि रत्नसत्त्वाभ्रकादयः[4] ॥ ५८ ॥
वज्रादिसर्वरत्नानि मणयः क्षेत्रधातवः ।
स्वेदने बिडयोगे च द्रावणे जारणे तथा ॥ ५९ ॥
क्षारद्रावः प्रदातव्यो द्रावयेत्सलिलं यथा ।

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे द्रुतिपात नानागणनिरूपणात्मकोऽष्टमः पटलः ॥

---

## अथ नवमः पटलः ।

रङ्गाकृष्टिं[5] प्रवक्ष्यामि यथा जानामि तत्त्वतः ।
न कुत्रचित्प्रयोगोऽस्ति शास्त्रेऽपि च न दृश्यते ॥ १ ॥

---

१ 'क्षणे क्षणे' घ. । २ 'स्वर्जिकाक्षारनामाऽयं' ग. । ३ 'द्रावयेन्मद्ययन्त्रतः' घ. । ४ 'सत्त्वान्यभ्रादिकानि च' ग. । ५ 'रङ्गाष्टकं' घ. ।

रसोपरसधातूनां रङ्गद्रावं सुशोभनम् ।
एतद्बौद्धा विजानन्ति भोटदेशनिवासिनः ॥ २ ॥
मणैकं लोहचूर्णस्य स्वर्जिकाया मणद्वयम् ।
त्रिभागं चूर्णकं दत्त्वा एकस्थमतिमर्दयेत् ॥ ३ ॥
क्षिप्त्वा चूर्णं बृहद्भाण्डे जलमूत्रेण पूरयेत् ।
चुल्लिकोपरि संस्थाप्य वह्निं प्रज्वालयेत्ततः ॥ ४ ॥
यदा फेनः समागच्छेच्छ्वेतवर्णस्तदूर्ध्वतः ।
अन्यपात्रे तदाऽऽस्थाप्य यावद्बध्नाति रक्तताम् ॥ ५ ॥
पश्चात्तं रक्तफेनं च पात्रमध्ये क्षिपेत्पुनः ।
क्षीणे मूत्रे जलं दद्याद्यावद्रक्तं च दृश्यते ॥ ६ ॥
तावद्रक्तं च गृह्णीयात्पुनः पात्रे निधापयेत् ।
यदा रक्तं न दृश्येत तदा वह्निं निवारयेत् ॥ ७ ॥
रक्तं वस्त्रेण संगाल्य मलशेषं विवर्जयेत् ।
श्वेतफेनेन संयुक्तं तस्यैतज्जलशोधनम् ॥ ८ ॥
काचसारितघट्यां च तद्धार्यं तदनन्तरम् ।
बृहद्भाण्डं समादाय कुक्षौ च छिद्रसंयुतम् ॥ ९ ॥
भाण्डमध्ये घटीं क्षिप्त्वा मुखं छिद्रे नियोजयेत् ।
तदास्ये काचनालं स्याच्च नालमधो मुखम् ॥ १० ॥
रुद्ध्वा तदा तयोः सन्धिमधं च नालकं दिहेत् ।
भाण्डं वालुकयाऽऽपूर्य तस्य द्वारं निरुन्ध्य च ॥ ११ ॥
वह्नेः प्रज्वालनं तावद्यावत्तन्नालकं द्रवेत् ।
शीतं यन्त्रं समुत्तार्य घटीं प्रक्षालयेत्ततः ॥ १२ ॥
द्रावं क्षिप्त्वा पुनर्दद्यात्पुनः पाको विधीयते ।
एवं रङ्गद्रुतिः प्रोक्ता देगयन्त्रेऽतिशोभना ॥ १३ ॥

---

१ 'त्रिभागचूर्णकं कृत्वा' घ.। २ 'अन्यपात्रे समादाय यावद्भवति रक्तता' घ.। ३ 'रक्तता' ख.। ४ 'मूत्रजलं' क. ग.। ५ '–शोषणम्' घ.।

तालो नागः शिला चौरः शुल्बो हंसश्च गन्धकः।
एते रङ्गं विमुञ्चन्ति विद्रुमं गैरिकं तथा॥ १४॥
वालुकादेगयन्त्रेण पिच्छकेशा द्रवन्ति च।
अम्लादिद्रावणं कार्यं यन्त्रेणानेन यत्नतः॥ १५॥
स्फटिकीनवसारौ च मारणौषधिभावितौ[1]।
चक्रयन्त्रे स्थिरीकृत्वा व्योमादिजारणं विडम्॥ १६॥
सैन्धवं च यवक्षारं मालतीतीरसंभवम्।
स्थिरीकृत्वा द्रवः कार्यः सर्वकर्मसु युज्यते॥ १७॥
शुक्तिका शङ्खचूर्णं च कुक्कुटाण्डभवास्त्वचः।
पचेद्गजपुटे चूर्णं सुदृढे[2] मल्लयन्त्रके॥ १८॥
नवसारयुतं गन्धं पचेत्कूपे सचूर्णकम्[3]।
सप्तवारं सुपक्कं[4] च लोहद्रावे नियोजयेत्॥ १९॥
जारणे[5] च बिडः प्रोक्तः परमो रसकर्मणि[6]।
सर्जिसैन्धवकासीसकाञ्जीः पिष्ट्वाऽम्लमूत्रकैः॥ २०॥
सप्तवारं पचेत्कूपे बिडोऽयं व्योमजारणः[7]।
गन्धकः सूचिकाक्षारो नवसारसमन्वितः॥ २१॥
एतानि समभागानि काञ्जीभागं च तत्समम्।
व्याघ्र्याश्चित्रस्य शिग्रोश्च यवचिञ्चारसेन च॥ २२॥
भावयित्वा पचेत्सर्वं वालुकायन्त्रखर्परे।
सक्षारसैन्धवादीनि काञ्जीकासीसतुत्थकम्॥ २३॥
भावयित्वा पचेत्कूपे सगन्धं चूर्णितं बिडः।
व्याघ्री सिंही तथा वज्री कुमारी चैव लाङ्गली॥२४॥

१ 'मालारसविभावितौ' 'मालतिरससंभृतौ' घ.। २ 'द्वादसोपलकैर्दृढैः' क; 'दशांशं मलकैर्दृढैः' ख. घ.। ३ 'सकर्णिके' क.। ४ 'सप्तवारमिदं पक्वं' ख. ग.। ५ 'चारणे' क.। ६ 'रत्नकर्मणि' ग.। ७ 'व्योमचारणः' क., 'व्योमकर्मणि' ख.।

मोचा चैवाग्निदमनी हंसपादी तथैव च ।
महौषध्यः प्रयोक्तव्या अष्टावेताश्च जारणे[1] ॥ २५ ॥
ब्रह्मदण्डी त्रिदण्डी च रुदन्ती चैव वानरी ।
मुद्गपत्री त्रिशूली च शङ्खी वज्री तथैव च ॥ २६ ॥
अष्टौ चैताः प्रयोक्तव्या औषध्यो बन्धने सदा ।
कर्कोटी कञ्चुकी चैव काकमाची च कालिका ॥ २७ ॥
काकाह्वा काकतुण्डी च कटुतुम्बी तथैव च ।
कालाञ्जनी च विख्याता अष्टावेताश्च मारणे[2] ॥ २८ ॥

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे क्षारद्रावबीडपाकदिव्यौषध्याधिकारो नाम नवमः पटलः ॥

---

## अथ दशमः पटलः ।

रत्नानां लक्षणं चैव जातिभेदं तथैव च ।
द्रावणं चैव वक्ष्यामि भेदनं च समासतः ॥ १ ॥
पञ्च दोषा गुणाः पञ्च छाया चैव चतुर्विधा ।
श्वेता रक्ता तथा पीता कृष्णा चैव निगद्यते ॥ २ ॥
षट्कोणं लघु तीक्ष्णं च बृहदष्टफलं[3] तथा ।
जले तरति यद्वज्रं तद्ग्राह्यं रसकर्मणि ॥ ३ ॥
मलो बिन्दुर्यवो रेखा पदं काकस्य दूषणम् ।
धाराहीनं तु यद्वज्रं त्रिकोणं च विवर्जयेत् ॥ ४ ॥
मेघानामथ[4] शङ्खानां[5] वराहस्य तु दन्तिनः ।
मीनजं वंशजं चैव फणिजं शुक्तिजं तथा ॥ ५ ॥
अष्टौ मुक्ताफलान्येव सदा जारणकर्मणि ।
गुणयुक्तानि संगृह्य दोषयुक्तानि वर्जयेत् ॥ ६ ॥
स्थूलं वृत्तं मधुच्छायं भ्राजिष्णु श्वेतमुज्ज्वलम् ।

---

१ 'चारणे' क. । २ 'चारणे' क. । ३ 'बृहदष्टदलं' ख. ग. । ४ 'मेषाणां' ग. । ५ 'सिंहानां' घ. ।

गुरु[1] स्निग्धं तथा प्रोक्तं रसराजस्य कर्मणि ॥ ७ ॥
पद्मरागं कुरुविन्दं सुगन्धं नील[2]गन्धकम् ।
माणिक्यं चैव विज्ञेयं ब्राह्मणादिक्रमेण तु ॥ ८ ॥
निर्धूमखदिराङ्गारमिन्द्रगोपसमप्रभम् ।
गुञ्जारागप्रतीकाशं माणिक्यं रसकर्मणि ॥ ९ ॥
इन्द्रनीलो महानीलो नीलश्च कृष्णनीलकः ।
एते नीलाश्च चत्वारो ब्राह्मणादिक्रमेण तु ॥ १० ॥
अतसीपुष्पसंकाशो नीलो[3] जीमूतसन्निभः ।
यः करोति पयो नीलं महानीलः स उच्यते ॥ ११ ॥
विज्ञेयो गरुडोद्गारः कीर[4]पक्षो द्वितीयकः ।
तृतीयो वंशपत्रश्च चतुर्थो धूलिधूसरः ॥ १२ ॥
खद्योतद्युतिसंकाशो मयूरगलसन्निभः ।
कोमलश्च चतुर्वर्णः[5] प्रशस्तो रसकर्मणि ॥ १३ ॥
चम्पकेन समो[6] वर्णे हेमवर्णः सुनिर्मलः ।
अतिदीप्तो भवेद्यस्तु पुष्परागः स उच्यते ॥ १४ ॥
बिडालनेत्रसंकाशं पीतवर्णं सुनिर्मलम् ।
चलद्बहु[7]सुसूत्रं च वैडूर्यं रसकर्मणि ॥ १५ ॥
अतिरक्तं सुदीप्तं च विद्रुमं परमं मतम् ।
ब्राह्मणादिचतुर्वर्णाः सर्वे[8]ष्वेवं भवन्ति हि ॥ १६ ॥
लघु वज्रं प्रशंसन्ति पद्मरागादि वै गुरु ।
कोमलत्वं मरकते प्रशंसन्ति परीक्षकाः ॥ १७ ॥
सर्वे भानुनिभा दीप्ताश्छायापटलवर्जिताः ।
निजैर्वर्णैः समायुक्ता उत्कृष्टा रसकर्मणि ॥ १८ ॥

१ 'गुरुवृत्तं' ग. । २ 'नीलकं मणिः' ख. । ३ 'नीलजीमूतसन्निभः' ख. घ. । ४ 'कीटपक्षो' ख. । ५ 'चतुर्नीलं चतुर्वर्णं प्रशस्तं' ख. । ६ 'चम्पकेन समो वर्णो' क. । ७ 'चलद्बहुसुनमध्यं तु' ख. 'चलद्बसनमध्यं तु' घ. । ८ 'सर्वत्रैवं' ख. ।

तारकर्मणि विप्राश्च क्षत्रिया हेमकर्मणि ।
रसैश्चोपरसैश्चैव ज्ञातव्यं[1] कर्मकोविदैः ॥ १९ ॥
द्रावणं च प्रवक्ष्यामि रत्नानां च यथाक्रमम् ।
वटाश्वत्थाश्वमारैश्च मेषशृङ्ग्यर्कसूरणैः ॥ २० ॥
स्नुह्युदुम्बरचिञ्चाभिः कुलित्थैर्वास्तुकेन च ।
पेटारीवज्रवल्लीभ्यां कोद्रवैष्टङ्कणेन[2] च ॥ २१ ॥
मीनाक्षीकाञ्चनाराभ्यां मञ्जर्या हि खरस्य च ।
नारीकुसुमदुग्धाभ्यां प्रसारण्या रसेन च ॥ २२ ॥
औषधीस्नेहयुक्तानि क्षारैरौषधिजैस्तथा ।
अम्लैः क्षारैश्च मूत्रैश्च रत्नानि स्वेदयेत्सुधीः ॥ २३ ॥
भजन्ति मार्दवं तानि स्वेदितानि न संशयः ।
निम्बुपत्ररसं[3] गृह्य मध्ये रत्नानि मोचयेत् ॥ २४ ॥
शोषयेद्रवितापेन द्रवो विंशद्दिनैर्भवेत् ।
मण्डूकमूत्रमध्ये तु द्रवन्ति सलिलं यथा ॥ २५ ॥
मूलेन गन्धमुर्व्यास्तु[4] वेष्टयेत्स्वेदितानि च ।
पलेन वेष्टितान्येवं वेष्टयेद्गोमयेन तु ॥ २६ ॥
जानुमात्रं खनित्वा तु गोमयं तत्र मोचयेत् ।
गोमयोपरि तं पिण्डं पुनर्गोमयपूरितम् ॥ २७ ॥
ऊर्ध्वे गजपुटो देयो दिनत्रयमहर्निशम् ।
विकसन्ति च रत्नानि प्रभाते पङ्कजं यथा ॥ २८ ॥
ततः संगृह्य यत्नेन काचकूप्यां निधापयेत् ।
मद्येन[5] पूरयेत्कूपं स्थिरक्षारैः समन्वितम् ॥ २९ ॥
भूगर्भे लद्दिमध्ये च चत्वारिंशद्दिनावधि ।
भूगर्भादुद्धरेत्कूपीं रत्नद्रावो भवेत्स्फुटम् ॥ ३० ॥

---

१ 'कर्तव्यं' । २ '–कपिकच्छुभिः' घ. । ३ 'निम्बपत्ररसं' घ. । ४ '[illegible] मलेनैव' घ. । ५ 'मध्ये तु कूपिकां स्थाप्य पञ्चक्षारसमन्विताम्' घ. ।

अथवा मारयित्वा तु रत्नानि द्रावयेद्बुधः।
शोषयित्वा जलं सर्वं रत्नानां ग्राहयेद्द्रुतिम् ॥ ३१ ॥
अथा[1]न्यत्संप्रवक्ष्यामि रत्नानां मारणं स्फुटम्[2]।
गन्धतालशिलाहंसमाक्षिकं विमलं समम् ॥ ३२ ॥
मारणौषधिभिर्भाव्यं तेन रत्नानि वेष्टयेत्।
म्रियन्ते सर्वरत्नानि पुटैर्द्वादशभिर्दृढैः ॥ ३३ ॥
मेष[3]शृङ्गी च माक्षीकं कर्कोटी चा[4]रणी तथा।
मारणं सर्वरत्नानां परमं समुदाहृतम् ॥ ३४ ॥
गरुडं गन्धकं भिन्द्याद्ब[5]दर्या वन्ध्यया तथा।
अश्वत्थेन च संभाव्य पुटेत् पिण्डं सरत्नकम् ॥ ३५ ॥
म्रियन्ते तेन योगेन ब्रह्मरत्ना[6]नि तत्त्वतः।
स्नुह्यर्ककरवीरं च भूनागो दरदो वटः ॥ ३६ ॥
म्रियन्ते क्षत्रजातीनि पुटैरेषां न संशयः।
गन्धकं कूर्मपृष्ठं च बलात्रयमुदुम्बरम् ॥ ३७ ॥
उत्तरावारुणीक्षीरं वैश्यानां मारणं पुटैः।
गन्धाश्मा च शिला तालं गरुडं गन्धटङ्कणे ॥ ३८ ॥
मेषशृङ्गं समाक्षिकं नारीपुष्पपयःप्लुतम्।
एभिर्विलिप्तमूषायां धमनाद्रत्नमारणम् ॥ ३९ ॥
(द्वि[7]चक्राङ्कैःस्नुहीक्षीरं नारीपुष्पपयःप्लुतम्।
एभिर्विलिप्तमूषायां धमनाद्रत्नमारणम् ॥ ४० ॥)
निलिका शङ्खचूर्णं तु शिलाभूनागसूरणम्।
[8]वटवज्रलतापेषं शूद्राणां मारणं पुटैः ॥ ४१ ॥
रसहंसशिलातालं गरुडं गन्धटङ्कणम्।

---

१ 'अथातः' ग.। २ 'शुभम्' ख.। ३ 'मेषशृङ्गं' ग.। ४ 'वारुणी' ग; 'नागरी' ख.। ५ 'बदरी वन्ध्यकां यथा' घ.। ६ 'बवरत्नानि' ख.। ७ अयं श्लोकः ख. ग. पुस्तकयोर्नोपलभ्यते। ८ 'वटत्वचा तथा मेषी' ख.।

भूनागं विमलं वङ्गं मेषशृङ्गं सक[1]ञ्चुकम् ॥ ४२ ॥
शुक्रशोणितसंयुक्तं स्वेदनौषधिभावितम् ।
मूषालेपप्रयोगेन रत्नानां मारणं परम् ॥ ४३ ॥
क्षारेण शशदन्तस्य व[2]ल्कलेन शणस्य च ।
अम्लवेत्ररसेनैव गन्धकं प[3]रिभावयेत् ॥ ४४ ॥
हन्ति वज्रं न संदेहो वज्रं वज्राहतं यथा ।
मृतवज्रस्य चूर्णेन इन्द्रनीलं च मौक्तिकम् ॥ ४५ ॥
वापनान्म्रियते क्षिप्रं शिखिपित्तेन संयुतम् ।
शिलाजितु शिलाभेदमम्लवेतसकं तथा ॥ ४६ ॥
चुल्लिकाटङ्कणक्षारं शिखिपित्तेन भावयेत् ।
अनेन पद्मरागश्च म्रियते पुटयोगतः ॥ ४७ ॥
पद्मरागस्य चूर्णं तु वज्रचूर्णसमन्वितम् ।
हन्ति चैकेन वापेन वैडूर्यं नात्र संशयः ॥ ४८ ॥
पुष्परागं च वैडूर्यं गोमेदं हन्ति तत्क्षणात् ।
म्रियन्ते येन योगेन मेलं कुर्वन्ति तेन वै ॥ ४९ ॥
इदं तु परमं गुह्यं गोपनीयं प्रयत्नतः ।
जा[4]रणार्थं च रत्नानि भेदयेत्सततं बुधः ॥ ५० ॥
अन्यथा भेदयेद्यस्तु रौरवं नरकं व्रजेत् ।

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे रत्नलक्षणद्रावणभेदनमेलापकाधिकारो नाम दशमः पटलः ॥

---

## अथ एकादशः पटलः ।

बीजपाकं प्रवक्ष्यामि जारणा[5]र्थं रसस्य च ।
सू[6]तक्रमोऽयं जीर्णेन समबीजेन सिध्यति ॥ १ ॥

---

१ 'सचुम्बकम्' घ. । २ 'कल्केन लशुनस्य च' घ. । ३ 'तेन भावयेत्' क. ख. ४ 'चारणार्थं' क. । ५ 'चारणार्थं' क. । ६ 'शतक्रमोऽयं' ग. । 'शतक्रमेण' घ. ।

रक्ताभ्रं हेमरसकं हेमाभ्रं चपलं शिला।
माक्षिकं कान्ततीक्ष्णं च तीक्ष्णमाक्षिकमभ्रकम्[1]॥ २ ॥
हेम कान्तं च माक्षीकं तीक्ष्णमाक्षिककाञ्चनम्।
तीक्ष्णारुणं च माक्षीकं कान्ताभ्रं ताप्यकाञ्चनम्॥ ३॥
कृष्णाभ्रं हेमतीक्ष्णं तु शुल्बायस्कान्ततीक्ष्णकम्।
माक्षिकं गगनं हेम तीक्ष्णं ताम्रं च माक्षिकम्॥ ४॥
पीताभ्रं कान्ततीक्ष्णं च कान्तताम्राभ्रमाक्षिकम्।
ताम्रं कान्ताभ्रमाक्षीकं तीक्ष्णा[2]भ्रं नागमाक्षिकम्॥ ५॥
(ताम्र[3]तीक्ष्णाभ्रकं रुक्मं काञ्चनं शुल्बमाक्षिकम्।)
रुक्मव्योमख[4]गं तीक्ष्णं हेमाभ्रं शुल्बमाक्षिकम्।
(रु[5]क्मव्योमरविर्नागं कान्ताभ्रं हेममाक्षिकम्॥ ६ ॥)
रुक्मव्योमखगं चौरं खगं वङ्गाभ्रकाञ्चनम्।
रुक्मव्योमखगं शैलं सस्याभ्रं काञ्चनं खगम्॥ ७ ॥
रुक्मव्योमख[6]गं हंसं तुत्थाभ्रं खगकाञ्चन[7]म्।
रुक्मव्योमखगं शैलं रुक्मव्योमखगं त्रपु॥ ८ ॥
रुक्मव्योमखगं चौरं तालाभ्रं काञ्चनं खगम्।
रुक्मव्योमखगं घोषं रुक्मव्योमखगाञ्जनम्॥ ९ ॥
रुक्मव्योमखगं ब्राह्मी रुक्मव्योमखगं शिला।
रुक्मं खगं त्रपु तारं खगायश्चौरकाञ्चनम्॥ १० ॥
रुक्मं चौरं खगं शैलं हंसं राश्चोरमाक्षिकम्।
रुक्मं चौरं खगं सस्यं चौरं वैक्रान्तमाक्षिकम्॥ ११ ॥
रुक्मं चौरं खगं गन्धं रुक्मचौरं मलं खगम्॥ १२ ॥
(शिला[8]चौरखगं रुक्मं रुक्मचोरं च माक्षिकम्।)

---

१ 'हेममाक्षिकमभ्रकम्' ख.। २ 'तीक्ष्णार्कं' ख.। ३ अयमर्धश्लोकः क. पुस्तके नोपलभ्यते। ४ 'रुक्मं व्योमरविस्तीक्ष्णं' ख. घ. ५ अयमर्धश्लोकः क. ग. पुस्तकयोर्नोपलभ्यते। ६ 'रुक्मव्योमरविर्हंसं ख. घ.। ख. घ. पुस्तकयोः सर्वत्र 'खगं' इत्यत्र 'रविः' इति पाठ उपलभ्यते। ७ 'रविकाञ्चनम्' ख.। ८ अयंपाठः क. ख. पुस्तकयोर्नोपलभ्यते।

रुक्मचौरखगं तुत्थं काशीसं चौरमाक्षिकम्।
रुक्मं चौरं खगं काङ्क्षी रुक्मं चौरं खगं त्रपु ॥ १३ ॥
रुक्मं चौरं खगं नागं शुल्बारश्चौरमाक्षिकम्।
रुक्मचौरखगं शुल्बं राश्चौरं खगमाक्षिकम् ॥ १४ ॥
रुक्मं हंसशिलाचौरं चौरं राहंसमाक्षिकम्।
नागं रा रसकं शुल्बं हंसं राश्चौरमाक्षिकम् ॥ १५ ॥
राः शुल्बं रसकं हंसं राश्चौरं शुल्बहिङ्गुलम्।
चौरं रा दरदं रिरी हंसं राश्चौरहिङ्गुलम् ॥ १६ ॥
लोहं रा दरदं चौरं हिङ्गुलं चौरतीक्ष्णकम्।
रा काङ्क्षी हिङ्गुलं चौरं रा काशी(स)चौरहिङ्गुलम् ॥१७
हंसं रा रसकं चौरं पुनर्बीजं विधीयते।
हेमैकं त्रिगुणं चौरं हेमैकं त्रिगुणं खगम् ॥ १८ ॥
हेमैकं त्रिगुणं हंसं हेमैकं त्रिगुणं गिरिः।
हेमैकं त्रिगुणं तालं हेमैकं विमला त्रयम् ॥ १९ ॥
त्रिर्भूनागस्य हेमैकं हेमैकं त्रिगुणा शिला।
हेमैकं त्रिगुणं रक्तं हेमैकं त्रिगुणं वटम् ॥ २० ॥
हेमैकं त्रिगुणा रिरी हेमैकं च त्रितुत्थकम्।
हेमैकं त्रिगुणं घोषं हेमैकं त्रिगुणं त्रपु ॥ २१ ॥
हेमैकं त्रिगुणं नागं प्रोक्तं बीजमनेकधा।
प्रत्येकं श्लोकपादैकं कल्पितं बीजमत्र वै ॥ २२ ॥
पुनः प्रचारयोगेन बीजानामप्यनन्तता।
नानाक्षेत्रसमुद्भूतधातुपाषाणसत्त्वतः ॥ २३ ॥
रसोपरससंयोगात्कल्पयेद्बीजमुत्तमम्।
बीजैर्व्यस्तैः समं सूते भागोत्तरकृतैरपि ॥ २४ ॥

---

१ 'चैलहिङ्गुलम्' ख.। २ 'समं भूतैः' क.; 'समं भूतं' ग.।

कनके त्रिगुणे जीर्णे क्रमाद्वेधः शतावधिः[1] ।
उत्तमं कनकं जार्यं क्रमवृद्ध्या च वेधकृत् ॥ २५ ॥
रसे च क्रमवृद्ध्या[2] हि विंशत्रिंशद्गुणोत्तरम् ।
विषमं वा समं वापि समं विषममेव वा ॥ २६ ॥
रागसंख्याक्रमेणैव [3]बीजे जीर्णे च वेधकृत् ।
आदावेव तु बीजानां कुर्यान्मेलं यथाविधि[4] ॥ २७ ॥
निर्वाह्य सर्वबीजानि तापेन[5] सेचनेन तु ।
ताप्यं वा रसकं वाथ हंसं वा विमलं शिलाम् ॥२८॥
वापयेत्सर्व[6]बीजेषु सततं सेक[7]पिण्डतः ।
सेचनं रक्ततोयेन रञ्जनं स्याद्विशेषतः ॥ २९ ॥
भवन्ति सर्वबीजानि रञ्जितानि विशेषतः[8] ।
रसाश्चोपरसाश्चैव रक्ता पीताश्च कृष्णजाः ॥ ३० ॥
त्रिगुणा हेम्नि निर्व्यूढा हेमशेषं तु बीजकम् ।
तद्बीजं चारयेत्[9]सूते समभागं च जारयेत् ॥ ३१ ॥
रसस्य रञ्जनं कृत्वा समबीजेन सारयेत् ।
शतवेधी तदा मन्ये दिव्यं भवति काञ्चनम् ॥ ३२ ॥
व्योमसत्त्वं समं [10]जीर्णं बीजं चैव समं यदि ।
सारितः समबीजेन शतवेधी भवेद्रसः ॥ ३३ ॥
द्विगुणं यदि तज्जीर्णं सहस्रं वेधकारकम् ।
समेन शतवेधी स्याद्द्विगुणेन सहस्रकम् ॥ ३४ ॥
चतुर्गुणेन लक्षैकं कोटिं पञ्चगुणेन तु ।
तच्च षोडशधा जीर्णं तद्विधो जारितो रसः[11] ॥ ३५ ॥

---

१ 'शतादिके' ग. । २ 'भागवृद्ध्या' घ. । ३ 'बीजं जीर्णे' घ. । ४ 'यथोचितम्' ख. ग. । ५ 'पातने' ख., 'वापेन' ग., 'पात्रैः' घ. ६ 'सर्वपिण्डेषु' । क. ७ 'सेकपण्डितः' क.; 'स्तोकं स्तोकं च पिण्डकम्' ग. । ८ 'न संशयः' ख. । ९ 'जारिते सूते' ख. । १० 'जार्यं' ग. । ११ 'दश षोडश विंशद्वा त्रिंशद्वा जारितो रसः' ग.

वेधयेत्सर्वलोहानि स्पर्शधूमावलोकनात् ।
लोहघोषारताम्राणामेकद्वित्रिगुणांशकाः ॥ ३६ ॥
नागस्तिथ्यंशकः सर्वं धाम्यं तदर्धशेषतः ।
रञ्जनीयं समे जीर्णे कनके स्यात्सुबीजकम् ॥ ३७ ॥
जारिते सारिते बीजे शतवेधी भवेद्रसः ।
हेमसीसकताम्राणां प्रत्येकं च ग्रहांशकम् ॥ ३८ ॥
रीतिकातीक्ष्णघोषाणां वेदपक्षगुणांशकाः ।
हेमशेषं भवेद्बीजं शतवेधं करोति च ॥ ३९ ॥
तीक्ष्णं ताम्रसमं कृत्वा नागं निर्वाह्य षड्गुणम् ।
ताम्रशेषा भवेद्धेतुरक्ती व्यूढं सुबीजकम् ॥ ४० ॥
नागस्य षड्गुणा रिरी नागताम्रं तथैव च ।
तच्छुल्वं हेम्नि निर्व्यूढं बीजं भवति शोभनम् ॥ ४१ ॥
वसुभागकृतं हेम शुल्वरक्तं चतुष्टयम् ।
नागभागद्वयं सर्वं हेमशेषं तु बीजकम् ॥ ४२ ॥
सारं वङ्गं सितो गन्धो नागं शैलं च तालकम् ।
शिलारविसमं कान्तं कारवेल्लकमाक्षिकम् ॥ ४३ ॥
स्फटिका श्वेतकासीसे कुनटी श्वेतमञ्जनम् ।
तारे त्रिगुणनिर्व्यूढं तारशेषं तु बीजकम् ॥ ४४ ॥
यथा हेमकृतं बीजं तारबीजं तथैव च ।
कारयेत्सर्वबीजानि भागसंख्याक्रमेण तु ॥ ४५ ॥
स्वेदैः स्नेहैश्च संयुक्तं तालसत्त्वं च निर्वहेत् ।
ताराच्च त्रिगुणं सत्त्वं तारशेषं तु बीजकम् ॥ ४६ ॥
आरं तारं समं कृत्वा श्वेतमाक्षिकसंयुतम् ।
तारशेषं भवेद्बीजं जारितं सारितं समम् ॥ ४७ ॥

---

१ '–ग्रहांशकाः' ख. ग. । २ 'वारिते' क. । ३ 'लोहारविमलं' ख. । ४ 'श्वेताभ्रं' ख. । ५ 'प्रोक्तभागक्रमेण' ख. । ६ 'संसिक्तं' ख. ।

शुल्वं वङ्गं रीतिकां च वेधते नात्र संशयः।
तारं भवति शोभाढ्यं पूर्णेन्दुरिव राजते॥ ४८॥
सतीक्ष्णं कुटिलं ध्मातं तारे त्रिगुणवाहितम्।
जारितः सारितस्तेनं शतवेधी भवेद्रसः॥ ४९॥
पुनः पाकं प्रवक्ष्यामि बीजानां जारणाय च।
हेमशेषं कृतं बीजं चूर्णयेद्रेतनेन तु॥ ५०॥
मूत्राम्लक्षारकासीसं चित्रं काङ्क्षी कटुत्रयम्।
जारणौषधिकाषायं तेत्र लोध्रसमन्वितम्॥ ५१॥
सप्ताहं शुल्वजे पात्रे धृत्वा वस्त्रेण गालयेत्।
भावयेद्बीजचूर्णं तु त्र्यहं च भूधरे पुटेत्॥ ५२॥
एवं सप्तपुटा देया भावयित्वा पुनः पुनः।
धान्याभ्रमभ्रसत्त्वं वा बीजवत्पुटयेत्सुधीः॥ ५३॥
सूतेन्द्रो जीर्यते क्षिप्रं यथाऽन्नं जठरानलः।
अथवा बीजचूर्णं तु मारयित्वा त्रिगन्धकैः॥ ५४॥
माक्षिकेण युतं बद्ध्वा पचेद्द्वादशभिः पुटैः।
मूत्राम्लैर्भावयित्वा तु रुद्ध्वा च भूधरे पुटेत्॥ ५५॥
इच्छया सर्वबीजानां द्रुतिं कुर्याच्च पूर्ववत्।
द्रुतिं चरति सूतेन्द्रो यथाज्यं च हुताशनः॥ ५६॥
यन्त्रेण बिडयोगाच्च स्वेदयोगेन जीर्यते।
निर्मुखो जीर्यते बीजं दोलायां शतधा रसः॥ ५७॥

इति श्रीगोविन्दाचार्यविरचिते रससारे बीजपाकाधिकारो नामैकादशः पटलः॥

---

१ 'सारितस्तस्य' क.। २ 'तक्रलोध्रसमन्वितम्' ख.; 'तक्रलोहसमन्वितम्' ग.। ३ 'जार्यते' घ.। ४ 'माक्षीकसंयुतं कृत्वा' ग.। ५ 'बहुधा भूधरे पुटे' ग.।

## अथ द्वादशः पटलः ।

पुरा शुद्धो रसेन्द्रश्च संस्कारैर्यश्च संस्कृतः ।
चारयेज्जारयेत्तं[1] च महासिद्धिप्रदो भवेत् ॥ १ ॥
लोहखल्वे चतुष्पादे रसं तत्र विनिक्षिपेत् ।
क्षाराम्लवेतसं काञ्जी बिडं द्वात्रिंशदंशकम् ॥ २ ॥
चतुःषष्ठ्यंशकं व्योम ग्रासं दत्त्वा रसस्य तु ।
टङ्कणं हयलाला च लशुनार्द्रकचित्रकम् ॥ ३ ॥
मधुनिम्बरसं दत्त्वा यामयुग्मं विमर्दयेत् ।
सोष्णखल्वे चरेद्ग्रासं गर्भद्रुतिमवाप्नुयात् ॥ ४ ॥
नष्टपिष्टं परिज्ञाय यत्नेन क्षालयेद्रसम् ।
सोमानलस्य यन्त्रस्य नाभिमध्ये[2] रसं क्षिपेत् ॥ ५ ॥
दत्त्वाऽष्टांशं बिडं नाभिं किञ्चिदम्लेन पूरयेत् ।
क्षाराम्लं त्र्यूषणं मूत्रं राजिकाशिग्रुचित्रकम् ॥ ६ ॥
यन्त्रं[3] प्रपूरयेदेभिर्नाभेश्चोपरि साधकः ।
दद्यादुपरि यन्त्रस्य सच्छिद्रं समबुध्नकम्[4] ॥ ७ ॥
छिद्रे च दोरकं बद्ध्वा अम्लैः[5] खर्परपूरणम् ।
रसोपरि पतेद्बिन्दुः स्तोकं स्तोकं पुनः पुनः ॥ ८ ॥
यन्त्राधः स्थापयेद[6]ग्निमहोरात्रत्रयं बुधः ।
त्रिदिनैर्जीर्यते ग्रासं सूतको नात्र संशयः ॥ ९ ॥
यन्त्रादुद्धृत्य कोष्णेन क्षालयेत्काञ्जिकेन तु ।
चतुर्गुणेन वस्त्रेण शोषयित्वा निपीडयेत् ॥ १० ॥
ग्रहधूमेष्टिकाचूर्णं दग्धोर्णा च गुडं तथा ।
चतुःषष्ठ्यंशकैरेभिर्ग्रसते च पुनः पुनः ॥ ११ ॥

---

१ 'चारयेज्जारयेद्यन्त्रे' ग. । २ 'नालिमध्ये' ग. । ३ 'नालं' ग., 'भाण्डं' क. । ४ 'खर्परं' इति शेषः । ५ 'अम्लैश्च परिपूरणम्' ग. । ६ 'ज्वालयेदग्निं' ग. ।

निर्मलो जीर्यते ग्रासं तस्मादेभिर्विमर्दयेत् ।
ग्रासं तु पूर्ववद्दत्त्वा यन्त्रेणानेन जारयेत् ॥ १२ ॥
ग्रासे जीर्णे पुनर्ग्रासमजीर्णे च विवर्जयेत् ।
अजीर्णस्तु यदा सूतस्तदा कुर्याच्च पातनम् ॥ १३ ॥
स्वेदं तस्य प्रकुर्वीताजीर्णदोषविनाशनम् ।
पुनर्ग्रासं ततो दत्त्वा सोमाग्नौ चैव जारयेत् ॥ १४ ॥
मन्दानलं प्रकुर्वीत त्र्यहं सोमानलादधः ।
अमुना जीर्यते ग्रासं सूतको नात्र संशयः ॥ १५ ॥
अथवा दोलिकायन्त्रे जारणीयो रसेश्वरः ।
यानि कानि च पत्राणि भव्यानि सुलभानि च ॥१६॥
एतेषां प्रपुटं कृत्वा दत्तग्रासं न्यसेद्रसम् ।
स्फटिकीनवसारौ च बिडाम्लं पूर्ववत्क्षिपेत् ॥ १७ ॥
चतुर्गुणेन वस्त्रेण बध्नीयात् पोटलीपुटम्[1] ।
क्षाराम्लत्र्यूषणैर्मूत्रै राजिकाशिग्रुचित्रकैः ॥ १८ ॥
यन्त्रभाण्डं च संपूर्य काष्ठे बद्ध्वा च पोटलीम् ।
भाण्डमध्ये च विन्यस्य द्वारे दद्यात्सुटङ्कणम् ॥ १९ ॥
यन्त्राधः स्थापयेदग्निमहोरात्रत्रयं दृढम् ।
लोहे मृत्खर्परे वाऽथ स्वेदयोगेन जीर्यते ॥ २० ॥
चतुःषष्ट्यंशभागेन द्वयं ग्रासस्य दीयते ।
चत्वारिंशतिभागेन ग्रासस्यैव चतुष्टयम् ॥ २१ ॥
त्रिंशांशकेन षड् ग्रासा अष्टौ विंशांशकेन च ।
एते चतुर्विधा ग्रासा जीर्यन्ते स्वेदयोगतः ॥ २२ ॥
अतः परं प्रवक्ष्यामि सुखेनैव[2] तु जारणम् ।
चक्रराजेन यन्त्रेण यथा जीर्यति पारदः ॥ २३ ॥
दत्त्वा ग्रासं कलांशेन कूपे मृद्वेष्टिते न्यसेत् ।

---

१ 'पोटलीं ततः' ग. । २ 'सुखेन हेमजारणम्' क. ।

गन्धाश्मनवसाराभ्यां हीन[1]मष्टांशकं बिडम् ॥ २४ ॥
क्षिप्त्वा संधाय तच्चक्रे लम्बमानं सुकूपके ।
मुद्रां वज्र[2]मयीं दद्यान्मुखं तस्य निरु[3]न्ध्य च ॥ २५ ॥
वज्रमृत्स्नां च संगृह्य कर्तव्या सेवनाकृतिः ।
क्षिप्त्वा मुखे च तां तस्[4]यै लेपयेत्सुदृढं मुखम् ॥ २६ ॥
मूषां च मृण्[5]मयीं कृत्वा पुनर्दद्यात्तदानने ।
लेपयेत्तां प्रयत्नेन वज्र[6]मुद्रा च सा भवेत् ॥ २७ ॥
वज्रलोहं सुपा[7]नीयं काष्ठक्षारं तु कर्करम् ।
लवणेन च संयुक्तमिति सूक्ष्मं विमर्दयेत् ॥ २८ ॥
भवेन्मृत्स्ना यदा शुष्का अनयैव तु लेपयेत् ।
शुष्के शुष्के प्रदातव्यं मुखे मुद्रात्रयं शुभम् ॥ २९ ॥
बलिपूजादिकं कृत्वा मन्दानलमहर्निशम् ।
शीतं कूपं च संभेद्य क्षालयेदुदकेन वै ॥ ३० ॥
मर्दयित्वा पुनर्ग्रासं जीर्णे जीर्णे पुनः पुनः ।
एवं देया दश ग्रासा चा[8]रयेद्वाऽथ कच्छपे ॥ ३१ ॥
अर्कां[9]शैर्वा दश ग्रासा अष्टांशैर्नव च स्मृताः ।
चक्रे वा वालुकायन्त्रे कूपीयोगेन जीर्यति ॥ ३२ ॥
दद्याद्ग्रासं विधा[10]नेन सहमानाग्निवर्धनम् ।
स्वेदादूर्ध्वं दशग्रासान् जारयेद्वाऽथ कच्छपे ॥ ३३ ॥
द्वादशांशैश्च ये ग्रासास्तान् दद्यात्स्थलकच्छपे ।
अष्टांशैः कन्दगा जा[11]र्यास्तदूर्ध्वं मुखमध्यतः ॥ ३४ ॥

---

१ 'हीनषष्ठांशकं बिडम्' घ. । २ 'वज्रमृदा' ग. । ३ 'निरुष्णके' घ. । ४ 'लिप्त्वा मुखे च नालस्य' घ. । ५ 'मुखं च मृण्मयं' ग. । ६ 'यथा वज्रसमा भवेत्' घ. । ७ 'वज्रलोहस्य पानीयं' ग.; 'वज्रलोहसुपानीयं' घ. । ८ 'कलांशैश्च रसेश्वरे' ग.; 'जारयेत्काचकूपके' घ. । ९ 'अर्कांशैर्द्वादशांशैश्च' घ. । १० 'दद्याद्ग्रासविधानेन' घ. । ११ 'अष्टांशकं हेमजार्ये' घ. ।

त्रिदिनं स्वेदयोगेन जलकूर्मे [1]दिनत्रयम् ।
[2]स्थलकूर्मे दिनत्रीणि कन्दगं त्रिदिनं पचेत् ॥ ३५ ॥
क्षणाज्जीर्यति सूतेन्द्रो मुखमध्यगतो हि सः ।
दिने दिने प्रकुर्वीत दृढवह्निं सदा बुधः ॥ ३६ ॥
रसोपरि पुटं दद्याज्जलकूर्मे जलस्थिते ।
स्थलकूर्मे पुटं दद्याज्जलहीने सुकर्मधीः ॥ ३७ ॥
सग्रासं बिडसंयुक्तं कन्दमध्यगतं रसम् ।
तं कन्दं तु मृदाऽऽवेष्ट्य पुटं [3]दद्याच्च भूधरे ॥ ३८ ॥
अतः परं प्रवक्ष्यामि [4]मूषाबन्धनमुत्तमम् ।
वज्रमूषा प्रकर्तव्या [5]गर्भे क्षारश्च दीयते ॥ ३९ ॥
क्षारगर्भे बिडं दद्याद्बिडमध्ये च पारदम् ।
मोचयित्वा विधानेन पुटं दद्यात्करीषजम् ॥ ४० ॥
जीर्यते तत्क्षणाद्ग्रासं सूतको नात्र संशयः ।
दीयन्ते षोडश ग्रासाः पादांशैः पुटयोगतः ॥ ४१ ॥
चतुःषष्ट्यंशके जीर्णे [6]दण्डधारी भवेद्रसः ।
चत्वारिंशत्तु ग्रस्तेषु [7]रसः स्यात्पायसाकृतिः ॥ ४२ ॥
जलौकाकारस्त्रिंशांशे विंशांशेऽ[8]विप्लुषो रसः ।
छेदी च षोडशांशेषु दधिवद्द्वादशेषु च ॥ ४३ ॥
अष्टांशे नवनीताभः पादांशे बध्यते रसः ।
अभ्रके द्विगुणे जीर्णे [9]धूमत्वं नैव गच्छति ॥ ४४ ॥
जीर्णे [10]दशगुणे ग्रासे गतिस्तस्य न विद्यते ।
[11]उत्प्लुत्योत्प्लुत्य सूतेन्द्रो मूषायां पतते ध्रुवम् ॥ ४५ ॥

---

१ ‘जलस्थिते’ ग. । २ ‘स्थलकूर्मे पुटं दद्यात्कन्दमध्ये दिने जरेत्’ ग.; ‘स्थलकूर्मे जलं त्रीणि कन्दगस्त्रिदिनैर्जरेत्’ क. । ३ ‘दद्यादतन्द्रितः’ ग. । ४ ‘मूषाभेदनमुत्तमम्’ घ.; ‘मुखभेदनमुत्तमम्’ ग. । ५ ‘मध्ये’ ग. । ६ दण्डधारी भवेद्द्रवान्न क्षरतीत्यर्थः । ७ ‘चत्वारिंशांशके ग्रस्ते ग्रासे’ घ. । ८ अविप्लुषो भवेदासनान्न चलतीत्यर्थः । ९ ‘धूमत्वेनैव’ घ. । १० ‘वेदगुणे’ ग. । ११ ‘उत्पत्योत्पत्य’ क. ग. ।

जीर्णे च षड्गुणे ग्रासे कम्पते च मुहुर्मुहुः ।
बाह्ये चोत्प्लुत्य नायाति स्थितिस्थाने स्थिरायते ॥ ४६ ॥
जीर्णे चाष्टगुणे व्योम्नि ध्मातः क्षाम्यंति[1] पारदः ।
श्वेतादिबहुधा छाया व्योम्नि जीर्णे च दृश्यंते[2] ॥ ४७ ॥
न कम्पो न गतिस्तस्य धमनाज्जीर्यते रसः ।
अभ्रकेऽष्टगुणे जीर्णे महाबलमवाप्नुयात् ॥ ४८ ॥
लेपेन तारपत्राणि करोति दशवर्णकम् ।
गगनं शुल्वमाक्षीकं निर्वाह्य[3] व्योमशेषतः ॥ ४९ ॥
एतत्पादांशकं दत्त्वा धमनाद्रसजारणम् ।
गुञ्जेन्द्रगोपकेशाश्च[4] लाङ्गलीगन्धमूषकाः ॥ ५० ॥
बलात्रितयकार्पासं[5] स्त्रीपयष्टङ्कणं मधु ।
एभिर्विलिप्तमूषायां धमनाद्व्योममेलनम् ॥ ५१ ॥
वंशदण्डेन संचाल्य सेचनादभ्रमेलनम् ।
अथाभ्रे त्रिगुणे[6] जीर्णे पश्चात्कान्तं च जार्यते ॥ ५२ ॥
उत्तीर्णमभ्रसत्त्वेन[7] हेलया ग्रसते रसः ।
तद्द्वात्रिंशद्गुणादूर्ध्वं महाबीजं च जारयेत् ॥ ५३ ॥
लोहाष्टकं रसाः सर्वे तथैवोपरसाः खलु ।
एकत्र मेलनं कृत्वा लोहशेषं च कारयेत् ॥ ५४ ॥
तद्द्वात्रिंशद्गुणं जार्यं महाबीजमिदं रसे ।
जारयेद्धेमबीजं तु द्वात्रिंशद्गुणितं तथा ॥ ५५ ॥
व्योमादीनां च सर्वेषां द्रुतिमेलं च कारयेत् ।
व्योममाक्षिकशुल्वानां द्रुतिं दत्त्वा विमर्दयेत् ॥ ५६ ॥

---

१ 'क्षाम्यति' घ. । २ 'श्वेता निबध्यते छाया व्योमकीर्णेश्च दृश्यते' घ. । ३ 'निर्वाह्य व्योम संस्कृतम्' घ. । ४ 'गुञ्जेन्द्रगोपकीटाश्च' ग. । ५ 'बलात्रिवृत्करीरास्थि' घ. । ६ 'द्वात्रिंशद्गुणे' ग. । ७ 'उत्तीर्णे पुष्पसत्त्वे च' घ.; 'उत्तीर्णे तुल्यसत्त्वेन' ग. ।

औषधीलेपिता मूषा रसस्तत्र निधाप्यते।
अन्धमूषागतं ध्मातं द्रुतिमेलापकं शुभम् ॥ ५७ ॥
स्फुटं निवार्हयेत्सूतं द्रुतिजारणमुत्तमम्।
अमुनैव प्रकर्तव्यं सर्वेषां द्रुतिजारणम् ॥ ५८ ॥
रत्नमेलं प्रवक्ष्यामि यथा जानन्ति साधकाः।
नागं हेमद्रुतियुतं रत्नानां द्रुतिमेलनम् ॥ ५९ ॥
अयस्कान्तस्य तैलेन[1] गन्धपाषाणकस्य वा।
मिलन्ति सर्वरत्नानि द्रवन्ति सलिलं यथा ॥ ६० ॥
स्त्रीपुष्पं नरशुक्रं च इन्द्रगोपश्च भूलता।
छुच्छुन्दरीवसायुक्तं टङ्कणेन समन्वितम् ॥ ६१ ॥
मूषालेपप्रयोगेण रत्नानां मेलकारकम्।
जीर्यन्ते[2] सर्वरत्नानि षड्गुणानि च सूतके ॥ ६२ ॥
भागैकं रत्नचूर्णस्य भागौ द्वौ काञ्चनस्य च।
नागभागैकसंयुक्तमन्धमूषागतं धमेत् ॥ ६३ ॥
तद्बीजं जीर्यति क्षिप्रं हेलया च रसेश्वरः।
तरुणार्कनिभः सूतस्तडिल्लेखेव सुप्रभः ॥ ६४ ॥
इन्द्रगोपकसंकाशो रत्नजीर्णे तु रञ्जितः।
[3]रङ्गाकृष्टिः कृता पूर्वं तस्या रागेण रञ्जयेत् ॥ ६५ ॥
मूषायां वालुकायन्त्रे रञ्जयेत्क्रमयोगतः[4]।
रक्तविद्रुमरागेण द्वात्रिंशद्गुणितेन[5] च ॥ ६६ ॥
[6]ततो गन्धकरागेण रञ्जयेच्च रसेश्वरम्।
गन्धकोऽप्यधिको जार्यः शतसाहस्रसंख्यया ॥ ६७ ॥

---

१ 'गन्धेन' ग.। २ 'जारयेत्' ग.। ३ 'रङ्गाकृष्टैस्ततः पूर्वं तस्यरागैश्च रञ्जयेत्' घ.। ४ 'तं धमेत्क्रमयोगतः' घ.। ५ 'द्वाविंशतिगुणेन च' ग.। ६ 'अतो' घ.; 'अन्ते' ग.।

रागाधिक्यं[1] करोत्येष सर्वचारणकर्मणि ।
स्थिररागो भवेत्सूतो दर्शनाद्धेमकारकः[2] ॥ ६८ ॥
रवेर्मण्डलकं[3] तस्य दृश्यते पुरुषाकृतिः ।
अतःपरं प्रवक्ष्यामि रसबन्धनमुत्तमम् ॥ ६९ ॥
बध्यते[4] हि रसः सम्यग्भवेद्रागोदयः स्फुटम् ।
मारणैरौषधैर्दिव्यैर्मूत्रघृष्टैर्विलेपयेत्[5] ॥ ७० ॥
मूषायां भावितः सूतो धमनाद्भस्मतां व्रजेत् ।
बन्धने याश्च विख्याता अष्टावेव महौषधीः ॥ ७१ ॥
ताभिष्टङ्कणयुक्ताभिर्भावयेच्च रसेश्वरम् ।
ताभिर्विलिप्तमूषायां धमनात्खोटतां व्रजेत् ॥ ७२ ॥
बद्धं वाऽप्यथवाऽबद्धं सारयेच्च रसेश्वरम् ।
पादांशहेमसंयुक्तमबद्धं[6] च विवर्जयेत्[7] ॥ ७३ ॥
दीर्घा लोहमयी मूषा रसं तस्यां विनिक्षिपेत् ।
रक्ततैलवसायुक्तं मूषामध्ये विनिक्षिपेत् ॥ ७४ ॥
मूषोर्ध्वे[8] संपुटं दत्त्वा सन्धिलेपं तु कारयेत् ।
सच्छिद्रे संपुटे नालमुन्मत्तकुसुमप्रभम् ॥ ७५ ॥
अतियत्नेन तां मूषां करीषाग्नौ निधापयेत्[9] ।
हेमरक्तसमं नागं गालयित्वा विचक्षणः ॥ ७६ ॥
मूषानाले विनिक्षिप्तमित्थं संरति[10] सूतके ।
सप्तवारं प्रकर्तव्यं सारणं च महारसे ॥ ७७ ॥
सङ्कलीक्रमयोगेन सारणैव गुणोत्तरा ।
स्वर्णं करोति शब्देन नात्र कार्या विचारणा ॥ ७८ ॥
इत्थं च सारितः[11] सूतो व्यापी भवति निश्चितम् ।

---

१ 'रागान्वितं' ग. । २ 'हेमकारकः' ग. । ३ 'रश्मिमण्डलकं' ग. । ४ 'बन्धितो हि रसः सम्यग्रागे देयो भवेत्स्फुटम्' ग. । ५ 'मारणैरौषधैर्द्रव्यैर्मूषापृष्ठं विलेपयेत्' घ. । ६ 'अवेधं' घ. । ७ 'विमर्दयेत्' ग. । ८ 'मूषार्धे' घ. । ९ 'च सावयेत्' ग. । १० 'चरति' घ. । ११ 'साधितः' ग. ।

मारयेत्सूतराजेन्द्रं प्रवेशी जायते ततः ॥ ७९ ॥
माक्षिकं कुनटी गन्धं दरदश्च समीकृतम् ।
मारणौषधिभिर्भाव्यं नवसारेण संयुतम् ॥ ८० ॥
तेनैव लिप्तमूषायां रसेन्द्रं स्थापयेत्सुधीः ।
[1]पुटेन धाम्यमानोऽसौ म्रियते नात्र संशयः ॥ ८१ ॥
अथवा पुटयोगेन मारणं तु त्रिगन्धकैः ।
मारितो रसराजेन्द्रः प्रवेशी जायते ध्रुवम् ॥ ८२ ॥
तदूर्ध्वं रसराजस्य कारयेत्प्रतिसारणम् ।
नागेन मारितं हेम रसात्त्रिगुणितं कृतम् ॥ ८३ ॥
पश्चामृतेन संयुक्तं संमर्द्य पुटयोगतः ।
इत्थं [2]कृतो रसेन्द्रोऽसौ वेधते नात्र संशयः ॥ ८४ ॥
षड्गुणैर्नागपत्रैश्च पुटे बध्नीत सूतकम् ।
मधूच्छिष्टं च मधुकं मधूकं टङ्कणं सिता ॥ ८५ ॥
अश्वकर्णमलं गुञ्जा केशाश्रुच्छुन्दरीवसा ।
स्त्रीरजः स्त्रीपयः शुक्रमिन्द्रगोपश्च भूलता ॥ ८६ ॥
[3]वसातालशिलागन्धं सारिवा क्षीरिणी विषम् ।
हयारिनाभिकर्पूरस्नुह्यर्कक्षीरकन्दकम्[4] ॥ ८७ ॥
सर्जश्च मृतनागश्च गुडगुग्गुलुतुत्थकम्[5] ।
संगृह्यन्ते यथालाभं क्रामणोऽयं गणः स्मृतः ॥ ८८ ॥
क्रामणेन समायुक्तो वेधते पर्वतानपि ।
लोहेषु धाम्यमानेषु वेधस्तत्र प्रदीयते ॥ ८९ ॥
स्नेहैश्च वसया युक्तं सेचनीयं पुनः पुनः ।
[6]पर्वते क्रामणं चैतत् परं गुह्यमुदाहृतम् ॥ ९० ॥

---

१ 'हठेन' घ. । २ 'कृते' ग. । ३ 'वसातैलशिलागन्धं' घ. । ४ –'लाङ्गली' घ. । ५ –'सिक्थकम्' ग. । ६ 'सर्वेषां' ग. ।

स च सिद्धरसो नाम देहलोहार्थकारकः ।
महता पुण्ययोगेन सिध्यते च रसेश्वरः ॥ ९१ ॥
कोऽर्थः पुत्रेण जातेन मातुर्यौवनहारिणा ।
आत्मा संहारितस्तेन न कृतो येन पारदः ॥ ९२ ॥
साधिते सूतराजेन्द्रे सिद्धः सिद्धेषु मोदते ।
इच्छया विचरेल्लोके द्वितीय इव शङ्करः ॥ ९३ ॥
सिद्धविद्याधरा यक्षा उरगाश्च दिवौकसः ।
स्तुवन्ति ते साधकेन्द्रं साधिते च महारसे ॥ ९४ ॥
(सर्पं च षड्गुणं कृत्वा पारदं च द्विधा स्मृतम् ।
हेमभस्म त्रिभागेन क्रामणं समुदाहृतम्[१] ॥ ९५ ॥)

इति श्रीगोविन्दाचार्यविरचिते रससारे महारसजारणादिविधिर्नाम
द्वादशः पटलः ॥

---

## अथ त्रयोदशः पटलः ।

अथातः संप्रवक्ष्यामि शतादि[१]क्रममुत्तमम् ।
शतवेधी सहस्रस्य दशसाहस्रवेधकः ॥ १ ॥
(लक्षवेधी ततो ज्ञेयो दशलक्षस्य वेधकः ।
कोटिवेधी च विज्ञेयो रसः कोट्यधिवेधकः[२] ॥ २ ॥ )
धूमवेधी च सूतेन्द्रः स्पर्शवेधी महारसः ।
अवलोकनवेधी च शब्दवेधी महाबलः ॥ ३ ॥
व्योमसत्त्वं समं जीर्णं बीजं च समजारितम् ।
गन्धकः षड्गुणो जार्यः समबीजेन सारयेत् ॥ ४ ॥
शतवेधी प्रदातव्यो दिव्यं भवति काञ्चनम् ।
सारणान्ते भवेद्वेधो मारणान्ते रसायनम् ॥ ५ ॥
प्रतिसारणकं श्रेष्ठं सहस्रानन्तरं रसे ।
द्विगुणं व्योमसत्त्वं च बीजं च द्विगुणं यदि ॥ ६ ॥

---

१ 'सारणकममुत्तमम्' ग. । २ 'अयं श्लोकः क. ग. पुस्तकयोर्नोपलभ्यते ।

गन्धको रविसंख्यश्च बघ्नीयात्सूतकं ततः ।
द्विगुणेन तु संसार्य सारणात्प्रतिसारणम् ॥ ७ ॥
क्रामणेन समायुक्तः सहस्रैकस्य वेधकः ।
त्रिगुणं व्योमसत्त्वं च बीजं च त्रिगुणं यदि ॥ ८ ॥
अष्टादशगुणं गन्धं रक्तवर्गेण रञ्जितम् ।
त्रिगुणेन च संसार्य कारयेत्प्रतिसारणम् ॥ ९ ॥
क्रामणेन समायुक्तोऽप्ययुतैकस्य वेधकः ।
वेदसंख्यागुणं व्योम बीजं चैव चतुर्गुणम् ॥ १० ॥
चतुर्विंशतिसङ्ख्याकं जारयेद्गन्धकं क्रमात् ।
चतुर्गुणेन संसार्य प्रतिसार्यो रसेश्वरः ॥ ११ ॥
क्रामणेन समायुक्तो लक्षवेधी भवेद्रसः ।
षड्गुणं व्योमसत्त्वं च बीजं जार्यं च षड्गुणम् ॥ १२ ॥
षट्त्रिंशतिगुणं गन्धं जारणीयं प्रयत्नतः ।
षड्गुणेन च संसार्य प्रतिसार्यो रसेश्वरः ॥ १३ ॥
क्रामणेन समायुक्तो दशलक्षस्य वेधकः ।
तथा चाष्टगुणं व्योम बीजं चाष्टगुणं यदि ॥ १४ ॥
रञ्जयेद्गन्धरागेण अभ्ररागेण[2] सारयेत् ।
सारणात्प्रतिसंसार्यः कोटिवेधी भवेद्रसः ॥ १५ ॥
यावत्संख्यं ग्रसेद्बीजं[3] तावत्संख्यं तु सारयेत् ।
एकद्वित्रिचतुःपञ्चसप्तवारं तु सारयेत् ॥ १६ ॥
सर्वेषामुक्तबीजानां शतवेधी समेन तु ।
द्विगुणेन सहस्रं तु अयुतं त्रिगुणेन तु ॥ १७ ॥
चतुर्गुणेन लक्षैकं कोटिमष्टगुणेन तु ।
बीजं कलागुणं जीर्णं द्वात्रिंशत् षट् च त्रिंशकम् ॥१८॥

---

१ 'सारणं' घ. । २ 'अभ्रबीजेन' घ. । ३ 'भवेद्बीजं' घ. ।

वेधयेत्सूतराजेन्द्रो धूमस्पर्शावलोकतः ।
संकरे[1] तु विधिः प्रोक्तो बीजे त्रिगुणवाहिते ॥ १९ ॥
दद्याद्वेधं विधानेन[2] तद्विधानमथोच्यते ।
गद्याणः सिद्धकल्कस्य नागगद्याणका दश ॥ २० ॥
क्रामणेन समायुक्तमेकीकृत्वा[3] धमेत्ततः ।
वेधं[4] नागेन तेनैव तारं शुल्बं च वेधयेत् ॥ २१ ॥
अथवा धातुमावर्त्य[5] क्षिपेत्क्रामणसंयुतम् ।
वेधस्योद्घाटनं कार्यं क्रयं च विक्रयं ततः ॥ २२ ॥
गालिते नागगद्याणे सूतगद्याणकं क्षिपेत् ।
गन्धकं स्वर्जिकक्षारमेतद्गद्याणकद्वयम् ॥ २३ ॥
एतच्चतुष्टयं क्षिप्त्वा खल्वे कृत्वा विमर्दयेत् ।
जलेन भावनां दत्त्वा शरावसंपुटे क्षिपेत् ॥ २४ ॥
सन्धिं विलिप्य दातव्यं दृढं गजपुटं मृदा ।
गालयेत्सिद्धवेधं[6] तु चूर्णं तत्र विनिक्षिपेत् ॥ २५ ॥
तच्चूर्णस्य दशांशेन उद्घाटो जायते ध्रुवम् ।
खटिका लवणं गैरी काङ्क्षी चेष्टिकचूर्णकम् ॥ २६ ॥
इमाः पञ्च मृदः प्रोक्ताः सुवर्णशुद्धिहेतवे[7] ।
लेपितं पुटितं ताभिर्दिव्यं भवति काञ्चनम् ॥ २७ ॥

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे वेधादिक्रमो नाम त्रयोदशः पटलः ॥

---

## अथ चतुर्दशः पटलः ।

द्वन्द्वमेलं[8] प्रवक्ष्यामि साधकानां हिताय वै ।
विज्ञाते जायते यस्मिन् साधकः साधनक्षमः ॥ १ ॥

---

१ 'शङ्करेण' घ. । २ 'दद्याद्वेमविधानेन' घ. । ३ 'अधिकृत्वा' ग. घ. । ४ 'विद्धनागेन' ग. । ५ 'धातुमाक्षीकं' घ. । ६ 'सिद्धधातुं च' घ. । ७ 'सुवर्णसिद्धिहेतवे' ग. । ८ 'द्वन्दमारान्' घ. ग. ।

भागः शुद्धरसस्यैको गन्धभागद्वयं तथा।
मारणौषधिभिर्भाव्यं रक्तवर्गेण संयुतम् ॥ २ ॥
उत्थापयेत्काचकूप्यां चक्रयन्त्रे पुनः पुनः।
स्थिरत्वे च समापन्ने जलयन्त्रेण बन्धयेत् ॥ ३ ॥
अथाधोऽग्निरुपर्यापो मध्ये देयो रसेश्वरः।
अग्नीषोमाख्ययन्त्रेण बध्यते सप्तरात्रतः ॥ ४ ॥
समहेम्ना च संसार्यश्चन्द्रार्के षष्टिवेधकः।
एवं चोरशिलातालैरन्यसत्त्वैश्च संयुतम् ॥ ५ ॥
बीजाभ्रबन्धितं सूतं मारयेच्चक्रयन्त्रगम्।
रञ्जितो गन्धरागेण द्वन्द्वमारः सुशोभनः ॥ ६ ॥
यदा सूतः स्थिरीभूतो बध्यते जलयन्त्रगः[1]।
बन्धनौषधिसंयुक्तं मूपामध्यगतं धमेत् ॥ ७ ॥
रसशेषं भवेत्पश्चात्[2]समबीजेन सारयेत्।
चन्द्रार्के शतवेधेन करोति कनकं शुभम् ॥ ८ ॥
पिष्टीस्तम्भनकं चैव कथयामि समासतः।
रसात्पादांशकं[3] बीजं पिष्टीं कुर्याच्च[4] सुन्दरम् ॥ ९ ॥
दोलायन्त्रेण मद्याम्लैर्बन्धनौषधिभिस्तथा।
धान्याभ्रकं च सिन्धूत्थं मालतीतीरसंभवम् ॥ १० ॥
स्फटिकी यावशूकं च बन्धनौषधिभावितम्[5]।
रसं संवेष्टयेदेभिर्माषपिष्ट्या तथोपरि ॥ ११ ॥
आतपे शोषयित्वा तु स्वेदयेत्तैलमध्यगम्।
तैलस्वेदः प्रकर्तव्यो यावत्सप्तदिनावधिः ॥ १२ ॥
माषपिष्टिं[6] परित्यज्य संगृह्य रसगोलकम्।
स्फटिक्याद्यौषधैर्वेष्ट्यो माषपिष्ट्या ततः परम् ॥ १३ ॥

---

१ 'जलयन्त्रके' ग. २ 'ततः कृत्वा' ग.। ३ 'रसपादांशकं' घ.। ४ 'पिष्टिं कुर्यात्' क.। ५ 'बन्धनौषधिमिश्रितम्' ग. घ.। ६ 'माषपिष्टिः परित्याज्या रसगोलस्तु गृह्यते' ग.।

तं गोलं भूधरे यन्त्रे अहोरात्रत्रयं पचेत् ।
[1]त्रिदिनांत्रिदिनादूर्ध्वं पिण्डं कृत्वा तु नूतनम् ॥ १४ ॥
एवं च पुटयेत्सूतं विंशत्यैकाधिकैः पुटैः ।
पिष्टिस्तम्भनकं सम्यग्जायते नात्र संशयः ॥ १५ ॥
रञ्जयेद्गन्धरागेण समबीजेन सारयेत् ।
[2]मारयित्वा ततो [3]वेधं दद्यात्त्रिंशत्तु चोत्तमम् ॥ १६ ॥
एवं पिष्टिः प्रकर्तव्या सर्वबीजैः सुशोभना ।
अतः परं प्रवक्ष्यामि वरं निगडबन्धनम् ॥ १७ ॥
बीजचूर्णं पलैकं तु माक्षिकस्य पलं तथा ।
[4]पलैकं गन्धकं चैव पलैकं पातितं रसम् ॥ १८ ॥
[5]पलैकं टङ्कणं चैव बन्धनौषधिभावितम् ।
धमनाज्जायते खोटो रञ्जयेद्गन्धकेन [6]तम् ॥ १९ ॥
समहेम्ना च संसार्य मारयेत्पुटयोगतः ।
चन्द्रार्कं षष्टिवेधेन करोति कनकं शुभम् ॥ २० ॥
इच्छया [7]समभागेन कारयेत्संकलीं क्रमात् ।
रसस्य समभागेन पिष्टीकुर्याच्च बीजकम् ॥ २१ ॥
गन्धकेन समायुक्तं दिव्यौषधिविभावितम् ।
वज्रमूषां दृढां कृत्वा लेपयद्बन्धनौषधैः ॥ २२ ॥
[8]भूगर्भे स्थापयित्वा तु पुटं दद्यात्करीषजम् ।
सप्तदिनान्यतिक्रम्य [9]पार्श्वयुक्तं धमेत्ततः ॥ २३ ॥
आशापाशनिबद्धेऽयं दुःसाध्यः [10]सुखसाधकैः ।
सिध्यते च महापुण्यैर[11]तियत्ने कृते सति ॥ २४ ॥

---

१ 'त्रिदिनं, त्रिदिनादूर्ध्वं' ग. २ 'सारयित्वा' ग. । ३ दद्यात्रिंशद्वे-धनमुत्तमम्' ग. । ४ 'पलार्धं' ग. घ. । ५ 'कर्षैकं टङ्कणं दत्त्वा' घ. । ६ 'तु' ग. घ. । ७ 'सूतक्षेपेण' ग. घ. । ८ 'भूगर्ते' ग. । ९ 'पञ्चयुक्तं' ग. । १० 'सुखसाधनः' ग. । ११ '-रतियत्नैः कृतैरपि' ग.

आशापाशनिबद्धस्य अतिवह्निं विवर्जयेत् ।
गन्धकं वा त्रिगन्धं वा सूततुल्यं तु कारयेत् ॥ २५ ॥
दिव्यौषधिसमायुक्तं खल्वे कृत्वा विमर्दयेत् ।
ऊर्ध्वपातनकं कृत्वा तं रसं टङ्कणान्वितम् ॥ २६ ॥
वज्रमूषागते बद्धे बीजं निर्वाह्य यत्नतः ।
सौवीरं टङ्कणं काचं दत्त्वा दत्त्वा च धामयेत् ॥ २७ ॥
सूतशेषं ततः कृत्वा रञ्जयेद्गोलकं पुनः ।
समबीजेन संसार्यः शतवेधी भवेद्रसः ॥ २८ ॥
रसखोटपलैकं तु स्वच्छं रसपलं तथा ।
बीजं रससमायुक्तमेकत्रैव विमर्दयेत् ॥ २९ ॥
खोटं कृत्वाऽथ मूषायां क्षिप्त्वा देयः पुटो लघुः ।
क्रमेणाग्निसहं कृत्वा धम्यते सूतको बुधैः ॥ ३० ॥
निर्वाहयेत्तदा मूषां सूतशेषा भवेद्यदा ।
तत्खोटपलमेकं तु स्वच्छं रसपलं तथा ॥ ३१ ॥
बीजं रससमायुक्तमेकीकृत्वा तु धामयेत् ।
एवं तु सप्त संकल्यो वेधो दशगुणोत्तरः ॥ ३२ ॥
दशसंकलिकायोगात्स्पर्शवेधी भवेद्रसः ।
एवं क्रमेण कर्तव्या सर्वकर्मसु संकली ॥ ३३ ॥
यथाबीजप्रयोगाश्च द्रुतियोगास्तथैव च ।
ज्ञातव्याः साधकेन्द्रेण देवानामपि दुर्लभाः ॥ ३४ ॥
दशव्योमसमं सत्त्वं दशसत्त्वसमा द्रुतिः ।
द्रुतियोगाच्च सूतेन्द्रः सद्यो वेधकरो भवेत् ।
एवं सर्वं मया प्रोक्तं साधयेत्तद्विचक्षणः ॥ ३५ ॥

इतिश्रीमद्गोविन्दाचार्यविरचिते रससारे द्वन्द्वमारपिष्टिस्तम्भननिगडबन्धन-संकलिकायोगद्रुतिकर्मादिनिरूपणं नाम चतुर्दशः पटलः ॥ १३ ॥

---

१ 'आखोटको निबध्येत' घ. । २ 'कृत्वाऽन्धमूषायां' ग. घ. । ३ 'सूत-शेषं' ग. । ४ 'संस्कारा' ग. ५ '-शतवेधी' ग. ।

## अथ पञ्चदशः पटलः ।

रसोपरससत्त्वानां कर्माणि कथयाम्यहम् ।
येन विज्ञातमात्रेण सिद्धिः स्याच्च सुशोभना ॥ १ ॥
[1]अरक्तवर्णवैक्रान्तसत्त्वं हेमसमन्वितम् ।
एकत्र मेलनं कृत्वा [2]समं सूतस्य [3]जारयेत् ॥ २ ॥
[4]सारितः समबीजेन सहस्रैकस्य वेधकः ।
[5]वेधते सर्वलोहानि [6]रञ्जितो गन्धकेन [7]तु ॥ ३ ॥
पीतवर्णं च वैक्रान्तं ज्ञातव्यं रक्तवर्णवत् ।
कृष्णवैक्रान्तभागैकं समं कुर्याद्रसेन तु ॥ ४ ॥
व्याघ्रीरसेन संमर्द्य देयो लघुपुटस्ततः ।
[8]तद्भसीभवति क्षिप्रं नात्र कार्या विचारणा ॥ ५ ॥
अस्य चूर्णस्य भागैकं [9]शुद्धं रससमं कृतम् ।
संमील्यैकत्र चूर्णं तु धमनाद्भस्मतां व्रजेत् ॥ ६ ॥
भस्मनस्तस्य भागैकं [10]शुद्धं रससमीकृतम् ।
बन्धनौषधिभिर्भाव्यं गन्धकेन समन्वितम् ॥ ७ ॥
अन्धयित्वा प्रयत्नेन देयो लघुपुटस्ततः ।
वज्रमूषागतो ध्मातो धमनात्खोटतां व्रजेत् ॥ ८ ॥
तस्य खोटस्य भागैकं हेमभागसमं कृतम् ।
अन्धमूषागतो ध्मातः खोटो भवति शोभनः ॥ ९ ॥
प्रकटमूष्यां तु निर्वाह्य सूतशेषं च कारयेत् ।
तस्य खोटस्य भागैकं स्वच्छं [11]रससमीकृम् ॥ १० ॥

---

१ 'रक्तवर्णं च वैक्रान्तं हेमबीजं समं कृतम्' ग.; 'रक्तवर्णं तु वैक्रान्तसत्त्वं हेमसमीकृतम्' घ. २ 'समसूतेन' क. । ३ 'जार्यते' घ. 'सार्यते' ग. ४ 'सारिते' ग. । ५ 'विध्यते' घ. । ६ 'रञ्जिते' ग. । ७ 'यत्' क. ८ 'सोमार्कं वेधयत्' क. । ९ 'हेमभागसहस्रकम्' घ. । १० 'स्वच्छं' घ. ११ 'रससमं कृतम्' ग. घ. ।

समहेम्ना समायुक्तमेकीकृत्वा च [1]धामयेत्।
सौवीरं टङ्कणं काचं दत्त्वा दत्त्वा च धामयेत् ॥ ११॥
सप्तसंकलिकायोगाद्वेधो दशगुणोत्तरः।
दशसंकलिकायोगात्स्पर्श[2]वेधी भवेद्रसः ॥ १२ ॥
वैक्रान्तो वज्रवज्ज्ञेयो नात्र कार्या विचारणा।
कृष्णवर्णं च वैक्रान्तं कृष्णा[3]भ्रकसमन्वितम् ॥ १३ ॥
समहेम्ना समायुक्तं सूतेन्द्रे जारितं समम्।
सहस्रं वेधते सूतः सं[4]कल्या चोत्तरोत्तरम् ॥ १४ ॥
नीलवर्णं तु वैक्रान्तं सिद्धान्नसदृशं कृतम्।
सूतराजसमं कार्यं जम्बीरनीरमर्दितम् ॥ १५ ॥
जलयन्त्रे च संस्थाप्य सप्ताहं मर्दयेद्रसम्।
अन्धमूषागतो ध्मातः खोटो भवति शोभनः ॥ १६ ॥
मुखे प्रक्षिप्य मेधावी [5]भूमौ छिद्राणि पश्यति।
र[6]क्तवर्णमयस्कान्तं तच्चूर्णं रससंयुतम् ॥ १७ ॥
मर्दितं छागमूत्रेण धमनात्खोटतां व्रजेत्।
समहेम्ना च संसार्यः शतवेधं तु कारयेत् ॥ १८ ॥
चपलस्य तु भागैकं सूतभागद्वयं तथा।
हेमभागचतुष्कं च रसतुल्यं च गन्धकम् ॥ १९ ॥
भावयित्वाऽन्धमूषायां धमेत्क्रमगतं ततः।
हेम्ना च[7]पलयुक्तेन समं तेनैव सारयेत् ॥ २० ॥
तेन सूतसमांशेन नागवेधोऽरुणो भवेत्।
तेन सूत[8]शतांशेन शुल्ववेधोऽरुणो भवेत् ॥ २१ ॥

---

१ 'धाम्यते' ग.। २ 'कोटिवेधी' घ.। ३ 'कृष्णाभ्रकसमीकृतम्' घ; 'बीजं चैव समं यदि' ग.। ४ 'संस्काराच्च गुणोत्तरम्' ग.। ५ 'भूमेश्छिद्राणि' ग.। ६ 'रक्तवर्णं च वैक्रान्तं' क.। ७ 'चपलयुक्तं च' ग.। ८ 'नागशतांशेन' घ.।

तेन शुल्बशतांशेन तारं भवति काञ्चनम् ।
अन्ये सर्वे रसाश्चैव शतवेधस्य कारकाः ॥ २२ ॥
जारिताः [1]समबीजेन सारिताश्च समेन तु ।
[2]द्विगुणं विमलं चैव जारितं शतवेधकृत् ॥ २३ ॥
उपरसानां सर्वेषां रञ्जने बलमुत्तमम् ।
गन्धकेन विना लोके कर्म किंचिन्न [3]विद्यते ॥ २४ ॥
गन्धकेन विना सर्वं [4]लोहं नैवाभिरञ्जति ।
नागे स्नेहो बलं व्योम्नि रागस्तीक्ष्णात्परो नहि ॥२५॥
बलं रागस्तथा स्नेहः [5]कमले च व्यवस्थिताः ।
नागेन जारितः [6]सूतो लोहभावं परित्यजेत् ॥ २६ ॥
बीजत्वं बीजराजेन जायते नात्र संशयः ।
सर्वे मृदुकरा स्नेहाः सर्वे चाम्लाः प्रबोधकाः ॥ २७ ॥
सर्वे [7]मलापहाः क्षाराः सर्वे रक्ताश्च रञ्जकाः ।
दीपका [8]अम्लतीव्राश्च पाचका जारयेद्धनम् ॥ २८ ॥
रेचको द्रावयेल्लोहान् क्षीरिण्यो रसबन्धकाः ।
कठिणैर्जीर्णबीजैश्च नागं वङ्गं च वेधयेत् ॥ २९ ॥
मृदुबीजैश्च सर्वैश्च आरं शुल्बं च वेधयेत् ।
बीजे रागाधिकै[9]र्जीर्णैस्तारवेधं [10]समाचरेत् ॥ ३० ॥
माक्षिकेण विना बीजं न द्रवेत्सूतगर्भगम् ।
मृदुत्वं क्रामणोद्घाटं भवेन्नागेन निश्चितम् ॥ ३१ ॥
रसानुपरसांश्चैव मौक्तिकं वज्रमेव च ।
श्वेतानि सर्वरत्नानि तारकर्मसु योजयेत् ॥ ३२ ॥

---

१ 'समभागेन' क. । २ 'द्विगुणे व्योमजे बीजे जीर्णे तु शतवेधकृत्' ग.; 'द्विगुणं विमलं बीजं जीर्णं तत्सूतवेधकृत्' घ. । ३ 'दृश्यते' ग. । ४ 'लोहं च नैव रज्यते' घ. । ५ 'कमलं' क. । ६ 'नागे च जारिते सूते' घ.; 'वङ्गं च सारितः सूतो' ग. । ७ 'मेलापकाः' क. । ८ 'आम्लतिक्ताव' घ. । ९ '-र्जीर्णे' । १० 'प्रदापयेत्' घ. ।

तारकर्मणि कर्तव्यं तालकेनैव रञ्जनम् ।
वङ्गवेधो भवेद्यत्र तालकं तत्र वर्जयेत् ॥ ३३ ॥
स्त्रीस्तन्यटङ्क[1]सौवीरं लाङ्गली गिरिकर्णिका ।
चित्रकः करवीरश्च सारिवा क्षीरणी विषम् ॥ ३४ ॥
आभिर्विलिप्तमूषायां बध्नीयाद्बन्धनौषधैः ।

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे रसोपरसलोहकर्माधिकारो नाम पञ्चदशः पटलः ॥ १४ ॥

---

## अथ षोडशः पटलः ।

अथातः संप्रवक्ष्यामि रत्नानां च यथाक्रमम् ।
सुखे[2]साध्यं भवेद्येन साधकस्य च साधनम् ॥ १ ॥
कनके वज्रचूर्णं च[3] कलांशं योजयेद्बुधः ।
तद्बीजं मृतराजस्य समं यत्नेन जारयेत् ॥ २ ॥
समहेम्ना च संसार्यः शतवेधी भवेद्रसः ।
तारशुल्बकनागेषु वेधो देयो निजेच्छया ॥ ३ ॥
जीर्णाभ्रकस्य भागैकं मृतवज्रसमं कृतम् ।
मर्दयेन्मातुलुङ्गेन अङ्गुल्या मर्दनं स्मृतम्[4] ॥ ४ ॥
शुक्तिसंपुटमादाय तस्य मध्ये विमुञ्चयेत्[5] ।
संपुटं मृत्स्नयाऽऽवेष्ट्य रविघर्मे विशोषयेत् ॥ ५ ॥
शरावसंपुटे क्षिप्त्वा सन्धिलेपं तु कारयेत् ।
ततो लघुपुटेनैव रसभस्म प्रजायते ॥ ६ ॥
भस्मसूतस्य[6] भागैकं स्वच्छ[7]रससमीकृतम् ।
मर्दयेन्मातुलुङ्गेन भस्म[8] लघुपुटाद्भवेत् ॥ ७ ॥

---

१ 'स्त्रीस्तन्यं टङ्कणक्षारो' घ. । २ 'सुसाधनं' घ. । ३ 'रक्तवज्रस्य चूर्णं च' ग. । ४ 'स्फुटम्' ग. । ५ 'विनिक्षिपेत्' घ. । ६ 'भस्मनस्तस्य' ग. । ७ 'स्वर्णस्यैकं समीकृतम्' घ. ८ 'भस्मी लघुपुटे भवेत्' घ. ।

वैडूर्यपुष्परागेषु लक्षमेकमुदाहृतम्।
विद्रुमं च शतांशेन सूतेन्द्रे जारितं यदि ॥ २० ॥
तारपत्रस्य लेपनं[1] करोति कनकं शुभम्।
रत्नद्रुतिप्रयोगेण क्षणाद्बद्धो भवेद्रसः ॥ २१ ॥
अद्रुतैरमृतै रत्नैः कृतो बद्धो[2] भवेद्रसः।
रत्नानां शोधनं कर्म संक्षेपात्कथितं मया ॥ २२ ॥

इतिश्रीमद्गोविन्दाचार्यविरचिते रससारे रत्नप्रयोगाधिकारो नाम षोडशः पटलः ॥

---

## अथ सप्तदशः पटलः।

अथातः संप्रवक्ष्यामि कल्कबन्धाननेकशः।
सर्वबीजैस्तु कर्तव्यं पिष्टीस्तम्भनमुत्तमम् ॥ १ ॥
रञ्जितो गन्धरागेण त्रिशद्वेधी भवेत् स्फुटम्।
भागद्वयं रसेन्द्रस्य बीज[3]भागत्रयं कृतम् ॥ २ ॥
गन्धकं रसतुल्यं च बन्धनौषधिभावितम्।
चक्रराजेन यन्त्रेण स्थिरभस्म प्रकारयेत् ॥ ३ ॥
खोटं कृत्वा[4] तु संसार्य पिष्टि[5]वेधो भवेत्स्फुटम्।
बीजेनावर्तिते स्याच्च खोटबद्धश्च पारदः ॥ ४ ॥
मृतबद्धो मृते बीजे सजीवे च न वेधकृत्[6]।
खोटः पाटो जलौका च बद्धो भस्मेति पञ्चधा ॥ ५ ॥
अंशांशेन निबद्धो[7]पि बीजयुक्तः सुरञ्जितः।
स्थिरीभूतो यदा सूतस्तदा वेधे नियुज्यते ॥ ६ ॥

---

१ 'तारपत्रं प्रलेपेन' ग.। २ 'वेधो भवेद्रसात्' क.। ३ 'बीजं भागद्वयं तथा' घ.। ४ 'द्रावयित्वा' ग.। ५ 'पिष्टिबद्धो' ग.। ६ 'मृतबद्धो मृते जीवे सद्रवे नच मेलकृत्' ग.; 'मृतबद्धो मृतो बीजे न जीवो नच मेलकृत्' घ.। ७ 'अंशाच्चलनिबद्धोऽसौ' घ.।

धूमश्चिटिचिटिश्चैव मण्डुकप्लुतिरेव च।
सकम्पोऽतिभ्रमश्चैव पञ्चावस्था रसस्य तु ॥ ७ ॥
पञ्चावस्थाविनिर्मुक्तस्तदा वेधकरो भवेत्।
पिष्टिं वा निगडं वाऽथ स्थिरमसक्तं रसम् ॥ ८ ॥
पूर्वोक्तेन विधानेन चत्वारिंशद्दिनावधिः।
भावयित्वा[1] च संसार्यस्तदा[2] वेधकरो भवेत् ॥ ९ ॥
अथवा द्रुतसूतस्य धमनाद्बीजजारणम्।
उच्चवेधी भवेत्सूतः क्रमेण बीजजारणम्[3] ॥ १० ॥
अथवा तस्य सूतस्य द्रुतेर्जारणमुत्तमम्।
क्षुधितोऽतिनिराहारो[4] लोहाशुद्धस्य जारणात् ॥ ११ ॥
अक्रामणादतिग्रासाद्बिडहीनाधिकात्तथा[5]।
शीतत्वादतिवह्नित्वाद्देवतानां च विघ्नतः ॥ १२ ॥
इत्येता विक्रिया ज्ञेया दशभिः षण्ढजातयः।
अनेकशास्त्रभेदेषु कल्कभेदा अनेकशः ॥ १३ ॥
यदा तु विदिता युक्तिस्तदा सिद्धिर्न संशयः।
शिलया मारितं नागं सूतराजसमन्वितम् ॥ १४ ॥
रञ्जितं गन्धरागेण समबीजेन[6] सारयेत्।
तारवेधः प्रदातव्यो दिव्यं भवति काञ्चनम् ॥ १५ ॥
ज्ञातव्या रागसंख्या[7] च रञ्जनं तदनन्तरम्।
सारणं सर्वयोगेषु कर्तव्यं पण्डितैः सदा ॥ १६ ॥
एवं विधानतः कार्यं तारकर्म सुशोभनम्।
पद्मवर्णं हिरण्याभं पद्मगर्भं[8] तथा स्मृतम् ॥ १७ ॥

---

१ 'द्रावयित्वा' ग. घ.। २ 'ततो वेधः स्फुटो' ग.। ३ 'बीजजारितः' ग. ४ 'अतिशुद्रो निराहारो अशुद्धलोहजारणात्' ग.। ५ 'अक्रमेणादिते ग्रादसे बिडहीनादिकल्कतः' ग.। ६ 'समहेम्ना तु सारितः' ग.। ७ 'भागसंख्या' क. ग.। ८ 'पद्मगन्धं' ग.।

रूक्षं च पित्तलं चैव तद्विषं ब्राह्मणं विदुः।
रक्तवर्णं भवेद्यच्च गन्धेनागरुतुल्यकम् ॥ १८ ॥
तन्नूनं बहुवीर्यं च विज्ञेयं क्षत्रियं विषम्।
यद्विषं पीतवर्णं च गन्धेनैवागरूपमम् ॥ १९ ॥
रूक्षं च वातलं चैव विज्ञेयं वैश्यजातिकम्।
अजाशृङ्गसमाकारमञ्जनं गिरिनालकम्[1] ॥ २० ॥
कटुकं मद्यगन्धं च विज्ञेयं शूद्रजातिकम्।
मयूरं कालकूटं च सक्तुकं बिन्दुकं तथा ॥ २१ ॥
वत्सनाभं सुनाभं च शङ्खनाभं सुनिर्मलम्[2]।
भृङ्गं कर्कोटकं मुस्तं पुष्करं शुक्लकन्दकम् ॥ २२ ॥
रक्तशृङ्गं हरिद्रं च चक्रं हालाहलं तथा।
विषाणि आमरान्तानि मया ख्यातानि तत्त्वतः ॥२३॥
अष्टादश इमे ख्याता[3]: कालकूटाद्विनिर्गताः।
चत्वारि ब्रह्मजातीनि चत्वारि क्षत्रियस्य च ॥ २४ ॥
चत्वारि वैश्यजातीनि शूद्रजातिविषाणि षट्।
ब्राह्मणं तारयोगेषु क्षत्रियं हेमकर्मणि ॥ २५ ॥
वैश्यं हेमकरं प्रोक्तं शूद्रं व्याधिविनाशनम्।
हारिद्रं सक्तुकं मुस्तं रक्तशृङ्गं च कृष्णकम् ॥ २६ ॥
एत[4]द्विषपञ्चकं च शीघ्रसिद्धिकरं परम्।
रसात्पादांशकं बीजं पिष्टीकुर्वीत तेन च ॥ २७ ॥
विषं षडंशकं प्रोक्तं रसतुल्यं च गन्धकम्।
हिङ्गुलं चोरसत्त्वं च माक्षिकं च मनःशिला ॥ २८ ॥
खल्वे प्रक्षिप्य मेधावी समं सूतेन[5] मर्दयेत्।
शृङ्गे वा काचपात्रे वा भूचक्रे चक्रराजके ॥ २९ ॥

---

१ 'गिरिनामकम्' ग.। २ 'सुमङ्गलम्' ग. घ.। ३ 'भेदाः' ग. घ.
४ 'विषपञ्चमिदं प्रोक्तं शीघ्रकर्मकरं परम्' ग.। ५ 'सूतं च' ग.।

मन्दानलः प्रकर्तव्यो मासमेकं तु साधकैः।
रक्तस्नेहप्रवापं तु क्षीणे क्षीणे पुनः पुनः॥ ३०॥
लेपयेन्नागपत्राणि मूषालेपं च कारयेत्।
क्षीरजोनरशुक्रेण पयसा आर्द्रकेण च॥ ३१॥
क्षीरिणीसारिवाभ्यां च लाङ्गल्या च हयारिणा।
रुन्धयित्वा धमेन्नागं जपापुष्पसमं भवेत्॥ ३२॥
वेधितं तेन नागेन तारं भवति काञ्चनम्।
जारणे च प्रयोक्तव्यं बलयुक्तं च यद्विषम्॥ ३३॥
मारयेद्विषसंयुक्तं नागवेधं च कारयेत्।
शतादिकोटिपर्यन्तं क्रमेण वेधयेद्रसः॥ ३४॥
तारक्रिया प्रकर्तव्या हेमबद्धादिभिः सदा।
वेधयेन्नागवङ्गं च तारं चन्द्रोपमं भवेत्॥ ३५॥
समुद्रे चैव जायन्ते विषमत्स्याश्चतुर्विधाः।
तेभ्यः फेनं समुत्पन्नमहिफेनं चतुर्विधम्॥ ३६॥
केचिद्वदन्ति सर्पस्य फेनं स्यादहिफेनकम्।
जारणं श्वेतवर्णं च मारणं रक्तवर्णकम्॥ ३७॥
विषविदुत्तमं फेनं योजयेद्रसकर्मणि।
सारणं पीतवर्णं च रक्तवर्णं च चारणम्॥ ३८॥
व्योमजीर्णं रसं कृत्वा सूरणेन विमर्दयेत्।
यन्त्रे सोमानले ग्रासं रुद्ध्वा क्रमेण जारयेत्॥ ३९॥
समजीर्णं यदा रुक्मं चतुर्थांशेऽहिफेनकम्।
एकत्र मर्दयेत्खल्वे अम्लयुक्ते विशोधयेत्॥ ४०॥

---

१ 'रक्तस्नेहः प्रदातव्यो' ग.। २ 'जारणेन' घ.। ३ 'समुद्राच्चैव जायेत विषं तत्स्याच्चतुर्विधम्' ग.। ४ 'तस्य फेनसमुत्पन्नं' ग.। ५ 'विषादप्युत्तमं' घ.; 'विषादप्युत्तमं' ग.। ६ 'धारणं' घ.। ७ 'गन्धकेनैव मर्दयेत' घ.; 'द्रावणेनैव मर्दयेत' ग.। ८ 'स्वसमग्रासक्रमेण' ग. ९ 'विशोधयेत्' घ.।

यन्त्रस्य नलिकामध्ये सर्वं क्षिप्त्वा तु चारयेत्[1] ।
नलबाह्ये तु तद्यन्त्रं सिक्तया पूरयेत्ततः ॥ ४१ ॥
मन्दानलः प्रकर्तव्यो घटिकानां चतुष्टयम् ।
मधुघृताहिफेनैश्च तद्रसोद्धृत्य भावयेत् ॥ ४२ ॥
[2]गद्याणचतुरशीतिर्ग्राह्यो हठाच्च[3] पारदः ।
गद्याणं मृतकल्कस्य तस्य मध्ये विनिक्षिपेत् ॥ ४३ ॥
निरुन्ध्य वज्रमूषायां करीषाग्नौ तु धारयेत् ।
तद्धमेदन्धमूषायां रसो हेम प्रजायते ॥ ४४ ॥
आरताराऽर्कनागानां शतवेधात्तु काञ्चनम् ।
रसवङ्गारशुल्बानां वेधाच्चारं च हेमवत् ।
जारणादीनि कर्माणि उत्तमान्यहिफेनतः ॥ ४५ ॥

इति श्रीमद्गोविन्दाचार्यविरचिते रससारेऽनेककल्कभेदाधिकारो नाम सप्तदशः पटलः ॥ १७ ॥

---

## अथाष्टादशः पटलः ।

वदत्याचार्यगोविन्दो मणिकर्मप्रसाधनम् ।
[4]रवीन्दुतारसंज्ञाश्च मणयस्त्रिविधाः स्मृताः ॥ १ ॥
कोरयित्वाऽर्ककान्तौ च कार्यं मूषापुटद्वयम् ।
अष्टांशं कनकं दत्त्वा रसपिष्टिं च कारयेत् ॥ २ ॥
जारयेद्गन्धकं सूते सूर्यकान्तस्य संपुटे ।
ग्रीष्मे लघुपुटो देयो मध्याह्ने सूर्यरश्मिभिः ॥ ३ ॥
तापत्रयेण संतप्तो [5]बद्धो भवति पारदः ।
प्रत्यहं जारयेद्गन्धं मासं तापत्रयेण च ॥ ४ ॥
[6]त्र्यहादिकोटिपर्यन्तं जारयेच्च रसेश्वरम् ।
रसायनप्रयोगेषु वर्जयेत् सततं बुधः ॥ ५ ॥

---

१ 'चालयेत्' ग.। २ अयमर्धश्लोको ग. पुस्तके न विद्यते। ३ 'यत्नेन' घ.। ४ 'रसबिन्दुतारसंज्ञाः' ग.। ५ 'भस्मीभवति' ग.। ६ 'शतादिकोटिपर्यन्तं' ग. घ.।

सोमकान्तमणेः कर्म कर्तव्यं चन्द्ररश्मिभिः ।
वर्षे[1] पुटः प्रदातव्यो बद्धो हेम्नाऽक्षयो भवेत् ॥ ६ ॥
तं गोलं धारयेद्वक्त्रे अमरः खेचरो भवेत् ।
तारकान्तमणेः कर्म कर्तव्यं चन्द्रकान्तवत् ॥ ७ ॥
कठिनं मौक्तिकं लोके तारकान्तश्च कथ्यते ।
सूर्यकान्तादिवत्कार्यं चुम्बकभ्रामकादिषु ॥ ८ ॥
एषां[2] तापत्रये सूतो बद्धो जीर्यति गन्धकम् ।
अथातः संप्रवक्ष्यामि लोहादिकरणं शुभम् ॥ ९ ॥
जारणादिविहीनस्य द्रव्यसाधनकारकम्[3] ।
घोषभागाष्टकं चैव तीक्ष्णं विंशतिभागकम् ॥ १० ॥
एकत्र मेलनं कृत्वा भूनागनागसंयुतम् ।
तन्नागं त्रिगुणं व्यूढं घोषशेषं तु कारयेत् ॥ ११ ॥
मेलयित्वाऽर्धबीजं तु हेमार्धं काञ्चनं भवेत् ।
गौरीचूर्णं तु निर्वाह्य नागे च त्रिगुणं बुधः ॥ १२ ॥
तन्नागं त्रिगुणं शुल्बे शुल्बं तारे तथैव च ।
तारशेषं भवेद्रुक्मं वर्णैकादशकं स्फुटम् ॥ १३ ॥
रसकं त्रिगुणं शुल्बे शुल्बं तारे तथैव च ।
निर्वाह्य तारशेषं तु हेमार्धं[4] काञ्चनं स्फुटम् ॥ १४ ॥
आरं च त्रिगुणं तारे वापितं विमलं तथा ।
तत्कृतं तारशेषं च हेमार्धं काञ्चनं भवेत् ॥ १५ ॥
भागद्वयं च तीक्ष्णस्य घोषभागद्वयं तथा ।
वेदभागकृता रीतिस्तारमेभिः समीकृतम् ॥ १६ ॥
तारभागसमं शुल्बं नागः शुल्बसमो भवेत् ।
तारशेषं प्रकर्तव्यं निर्बीजं सप्तवर्णकम् ॥ १७ ॥

---

१ 'कोष्ठे' ग. । २ 'एष' घ. । ३ 'द्रव्यसंधानकारकम्' क. ग. । ४ 'हेमार्धे' घ. ।

बाणभागकृतं तारं नागार्कयोस्त्रिपञ्चकम्।
रुद्रभागकृतं तीक्ष्णं शुल्बं तारे च निर्वहेत्॥ १८॥
कङ्कुतैलनिषेकात्तु तारशेषं च कारयेत्।
जायते काञ्चनं दिव्यं पुरा देवेन भाषितम्॥ १९॥
वैक्रान्तानि सत्त्वानि तारे च त्रिगुणानि तु।
मारयित्वा तु निर्वाह्य अर्कबीजेन काञ्चनम्॥ २०॥
माक्षिकेन हतान् धातून् तारवापाद्दलं शुभम्।
माक्षिकेन त्रिधाऽर्केन्दू निहत्य पुनरुत्थितौ॥ २१॥
(मृतलोहानि निर्वाह्य तारे च षड्गुणं वपेत्।
रक्तस्नेहनिषेकात्तु अर्धबीजेन काञ्चनम्॥ २२॥)
मरुतं तारशेषं तु हेमार्धे काञ्चनं शुभम्।
एवं तु वेधितं तारं रसोपरसधातुभिः॥ २३॥
विनिहत्य त्रिगन्धेन त्रिधा चोत्थाप्य मारयेत्।
रक्तैः सिक्तं तारशेषं हेमार्धे काञ्चनं शुभम्॥ २४॥

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे मणिमूषाकर्मदलाधिकारो नामाष्टादशः पटलः॥ १८॥

---

## अथैकोनविंशतितमः पटलः।

अथातः संप्रवक्ष्यामि गुटिकाबन्धमुत्तमम्।
समजीर्णं कृतं व्योम समंतारं च योजयेत्॥ १॥
रविसंख्यांशकं तारं दत्त्वा पिष्टिं प्रकल्पयेत्।
धान्याभ्रकसमं गन्धं खल्वे क्षिप्त्वा विमर्दयेत्॥ २॥

---

१ 'तीक्ष्णं शुद्धं च निर्वहेत्' ग.। २ 'आवैक्रान्तानि' घ.। ३ 'अर्धबीजेन' ग. घ.। ४ 'हतं ताम्रं' ग.। ५ 'त्रिधार्कं तु निहत्य पुनरुत्थितम्' घ.। ६ अयं श्लोकः केवलं क. घ. पुस्तकयोरेवोपलभ्यते। ७ 'समसारं च सारयेत्' घ.; 'समतारं च जारयेत्' ग.। ८ 'तु कारयेत्' घ.। ९ 'शुल्वे' घ. क.।

तयो[1]र्मूषाकृतिं कृत्वा पिष्टिं मध्ये विमोचयेत् ।
नरमांसेन संवेष्ट्य माषपिष्ट्या तथैव च ॥ ३ ॥
प[2]चेदतसितैलेन मासमात्रं तु साधकः ।
अक्षया कामधेनुश्च वङ्गस्तम्भनकारिणी ॥ ४ ॥
श्वेताभ्रद्रुतिमादाय समं सूतेन मर्दयेत् ।
समं तारेण संयुक्तां श्वेतागस्त्यरसेन च ॥ ५ ॥
अयस्कान्ताश्म गन्धं च हयलालासमन्वितम् ।
एकत्र गोलकं कृत्वा नरमांसेन पाचयेत् ॥ ६ ॥
द्वितीया कामधेनूक्ता तारकर्मणि शोभना ।
समजीर्णे तु कृष्णाभ्रं रुक्मं[3] सप्तगुणं यदि ॥ ७ ॥
रञ्जितं गन्धरागेण नरमांसेन वेष्टयेत् ।
माषपिष्ट्या प्रलिप्याथा[4]र्तसीतैलेन पाचयेत् ॥ ८ ॥
कामधेनुः समाख्याता नागस्तम्भनकारिणी ।
पिष्टिं वा निगडं वाऽथ संकलीकृतमेव च ॥ ९ ॥
[5]बीजं जीर्णे तु सूतेन्द्रे नरमांसेन पाचितम् ।
व्ययेऽपि वि[6]स्तरा जाता बहुधा कामधेनवः ॥ १० ॥
रसात्पादांशकं हेम पिष्टिं कुर्याच्च सुन्दरम् ।
विलिप्य कामधेनुं च नागद्रावे विमुञ्चयेत् ॥ ११ ॥
तन्नागं कुरुते रुक्मं वाञ्छितार्थेषु सिद्धिदम् ।
गुटिकां कामधेनुं तां प्रत्यहं धारयेन्मुखे ॥ १२ ॥
शस्त्रास्त्रैर्न च भिद्येत दिव्यदेहमवाप्नुयात् ।

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे गुटिकाकथनं नामैकोनविंशतितमः पटलः ॥ १९ ॥

---

१ 'ताभ्यां' ग. । २ 'मर्दयेत्तिलतैलेन' ग. । ३ 'रुक्ममष्टगुणं' घ. । ४ 'उन्मत्ततैलपाचिता' ग. । ५ 'बीजे जीर्णे तु सूतेन्द्रो नरमांसेन पाचितः' घ. । ६ 'ख्याताः सविस्तरं' घ. ।

## अथ विंशतितमः पटलः।

जारितः सूतराजेन्द्रः पादांशहेमयोजितः ॥ १ ॥
दिव्यौषधिनिबद्धश्च वयःस्तम्भकरो भवेत्।
वारुणी यवचिञ्चा च धूर्तमूलं च लाङ्गली ॥ २ ॥
विषटङ्कणगुञ्जाश्च पिकाक्षं पञ्चबीजकम्।
कार्पासफलनिर्यासरसैः पिष्टौषधानि तु ॥ ३ ॥
मूषाकारेण कर्तव्यं भावयित्वा न्यसेद्रसम्।
मृदा संवेष्टितं गोलं तथा कर्पटकेन तु ॥ ४ ॥
छायाशुष्कं तु संवेष्ट्य अष्टवारं पुनः पुनः।
तुषाग्नौ स्वेदयेद्गोलं यावद्यामाष्टकं भवेत् ॥ ५ ॥
हठेन धाम्यमानस्तु खोटो भवति चाक्षयः।
बद्धश्च सह हेम्ना तु मुखस्थः स्तम्भयेद्वयः ॥ ६ ॥
अभ्रकेऽष्टगुणे जीर्णे समबीजेन सारिते।
षड्गुणे गन्धके जीर्णे गुटिका खेचरी भवेत् ॥ ७ ॥
व्योमद्रुतिश्च रैत्यं च मुक्ताद्रुतिसमं कृतम्।
गन्धकेन समायुक्ता गुटिका खेचरी भवेत् ॥ ८ ॥
(व्योमद्रुत्या रसो बद्धो हेमद्रुत्या समो यदि।
वज्रे चान्नपथे जीर्णे गुटिका सिद्धखेचरी ॥ ९ ॥)
व्योम हेम शिलासत्त्वं गन्धकं जारयेद्रसे।
शैलोदके रसे बद्धे खेचरत्वं न संशयः ॥ १० ॥
समेऽथ द्विगुणे वाऽथ चतुरष्टगुणेऽथवा।
षोडशद्विगुणे बीजे गुटिका खेचरी भवेत् ॥ ११ ॥
व्योम हेम तथा तारं वज्रं मुक्ताफलं तथा।
गन्धकं च शिलासत्त्वमेभिर्बद्धो हि खेचरः ॥ १२ ॥

---

१ 'द्वन्द्वितं समहेम्ना तु' ग.। २ 'रुक्मं च' घ.। ३ 'वाऽन्नपथे' ग.।
४ 'खेचरी भवेत्' ग.। अयं श्लोको घ. पुस्तके नोपलभ्यते। ५ 'व्योमसत्त्वं' घ.।

कोरयेद्दारुणं काष्ठं रसपिष्टिं विमोचयेत्।
शैलोदके च त्रिगुणे काले संस्थापयेत्सुधीः ॥ १३ ॥
पञ्चामृतेन संस्वेद्य बलिपूजाविधानतः।
जपेदघोरमन्त्रं तु खेचरः केन वार्यते ॥ १४ ॥
सबीजा गुटिका कार्या जारयेच्च महाबिडम्।
पिङ्गलाखञ्जनगृध्रकृष्णपारावते तथा ॥ १५ ॥
उलूकहृदये बद्धा भूयो भवति खेचरी।
पक्षिणं चारयेत्सूतं मारयेत्तदनन्तरम् ॥ १६ ॥
शालिपिष्टेन संवेष्ट्य पचेत्तैलेन साधकः।
मासैकस्य प्रयोगेण गुटिका खेचरी भवेत् ॥ १७ ॥
बलिपूजा प्रकर्तव्या जपो होमस्तथैव च।
पक्षिणा भक्षितं सूतं चितायां पाचितं यदि ॥ १८ ॥
दुग्धेन सिञ्चनं कार्यं गुटिका खेचरी भवेत्।
समाभ्रकं यदा जीर्णं समं स्रोतोजमञ्जनम् ॥ १९ ॥
बन्धनौषधिबद्धं च नरमांसेन वेष्टयेत्।
कुक्कुटं चारयेत्कृष्णातिलैः संयोजितं रसम् ॥ २० ॥
वमनं दीयते तस्य गुटिका गोप्यकारिणी।
अथ पारावतं कृष्णं चारयेत्पूर्ववद्रसम् ॥ २१ ॥
चितायां पाचनं कृत्वा पुना रक्तेन सेचयेत्।
बलिपूजाविधानेन वक्त्रस्था गोप्यकारिणी ॥ २२ ॥
जीर्णव्योमाञ्जनरसं बीजैः पिष्टिं तु कारयेत्।
चारयेत्कृष्णमार्जारं चितायां पाचयेद्यदि ॥ २३ ॥
तस्य रक्तेन संसिक्ता गुटिकाऽदृश्यकारिणी।
सरक्तं व्योमसंयुक्तं सूतेन्द्रं जारितं समम् ॥ २४ ॥

---

१ 'त्रिकालं च स्थापयेद्यत्नतः सुधीः' ग.। २ 'वश्या' ग. घ.। ३ 'वेष्टितम्' ग. घ.। ४ 'गोपनी भवेत्' ग.। ५ 'गोपयेन्नरम्' ग.।

कनकेन युतं बद्धा पाताले विचरेन्नरः ।
पद्मरागयुतं बद्धा पातालं वशमानयेत् ॥ २५ ॥
[1]कृष्णभूतानि संगृह्य जीवन्तं सितजम्बुकम् ।
भारण्डं गृध्रमासं वा रेवत्यथ बिडालकम् ॥ २६ ॥
तरक्षुद्वीपिसेढाश्च काकश्च नकुलस्तथा ।
श्यामा च खञ्जनश्चैव उलूको द्विमुखी तथा ॥ २७ ॥
पिङ्गला नातिकृष्णा च बलाका असिता तथा ।
[2]सिद्धद्रव्या इमे ख्याता विवि[3]धाः साधयेच्च तान् ॥२८॥
एकं संगृह्य चैतेषां कृष्णभूते विघातये[4]त् ।
दत्त्वा बलिमघोरेण विश्वरूपाय विश्वया ॥ २९ ॥
अस्त्रेण मार[5]यित्वा तु निखनेच्च चतुष्पथे ।
स्मशाने वाऽथ रक्षेत त्रि[6]सन्ध्यं घोरपूजनात् ॥ ३० ॥
लक्षमन्त्रं जपेत्तत्र अघोरं विश्वया सह ।
मासैकेन यथायोगं मासे पूर्णे समुद्धरेत् ॥ ३१ ॥
मत्स्यमांसबलिं द[7]त्त्वा पललं सार्व[8]भौतिकम् ।
पुष्पाणि च सुगन्धीनि गन्ध[8]धूपं निवेदयेत् ॥ ३२ ॥
समुद्रगामिनीं गत्वा एकैकास्थि विमो[9]चयेत् ।
यस्मिन् करस्थे पुरुषो द[9]र्पणं[10]स्थं न पश्यति ॥ ३३ ॥
तदस्थि गोपनं ख्यातं देहलग्नं न संशयः ।
तदस्थि [11]भ्रामयेद्देहे विश्व[12]रूपं स गच्छति ॥ ३४ ॥

---

१ 'कृष्णभूताहि' घ.। २ 'सिद्धिद्रव्या' ग.। ३ 'विधिना संग्रहेच्च तान्' ग.। ४ 'एवं संग्रहयेत्तेषां कृष्णभूतानि पातयेत्' ग.; 'एतान् संगृह्य चैतेषां कृष्णभूताहि घातयेत्' घ.। ५ 'रक्षयित्वा' ग. क.। ६ 'त्रिसन्ध्याघोरपूजनात्' घ. क.। ७ 'मत्स्यमांसासृजं दद्यात्' ग.। ८ 'धूपदीपे' घ.। ९ 'विशोधयेत्' ग.। १० 'दर्पणे स्वं' ग.। ११ 'भ्रामयेन्मन्त्री' ग. घ.। १२ 'विश्वरूपात्सगच्छति' क.; 'विश्वरूपात् समुद्धरेत्' ग. घ.।

मायाजालान्यनेकानि दर्शयेत्तत्क्षणेन तु ।
यावत्स्थितप्रयातानि पूरकुम्भकरेचकैः ॥ ३५ ॥
उलूकस्य शृगालस्य समभागकृता वसा ।
पादलेपमिमं कृत्वा पादुके चोष्ट्रचर्मणः ॥ ३६ ॥
आरुह्य विचरेद्धीरो यत्र यत्र प्ररोचते ।
गृध्रस्य च उलूकस्य वसां पादे प्रलेपयेत् ॥ ३७ ॥
अश्वत्थस्य च पत्राणि जङ्घायां च निबन्धयेत् ।
आरुह्य स्वेच्छया याति पादुके चोष्ट्रचर्मणः ॥ ३८ ॥
मानवाः सर्ववर्णानां कालयोगात्क्षयं गताः ।
अन्ये चैव महावीरा महाहवनिपातिताः ॥ ३९ ॥
तेषां कपालमादाय पुष्येऽघोरविधानतः ।
नृपापराजितां सिद्धां कृष्णलां वा सितां तथा ॥ ४० ॥
[1]भावयित्वाऽऽङ्कुले तैले नृकपाले प्रवापयेत् ।
अर्कतोयप्रसिक्तानि अजाविकपयस्यपि ॥ ४१ ॥
पुष्यार्के फलकाले तु उद्धरेत्तां निशामुखे ।
[2]पूजां मांसबलिं दत्त्वा वक्त्रस्था गोपना भवेत् ॥ ४२ ॥
त्रिलोहवेष्टितां कुर्या[3]द[4]र्कषोडशखेन्दुभिः ।
वीर्यस्तम्भं च कुरुते शस्त्रघातं विनाशयेत् ॥ ४३ ॥
रक्ता सि[5]ताश्वमारस्य गुञ्जा वा [5]कक्षिणी मता ।
ताडनात्स्पर्शनाद्वाऽपि सुबीजेन तु संयुता ॥ ४४ ॥
[6]तं तन्मूलगतं पात्रं तत्रान्नमक्षयं भवेत् ।
तदङ्कफलपुष्पैश्च माला कण्ठे तु गोपनी ॥ ४५ ॥

---

१ 'भावयित्वाऽऽख्नुतैलेन' क. । २ 'सा शिखा तु' क., 'तां शिखां तु' घ. । ३ 'दशार्कषोडशादिभिः' घ., 'अर्कषोडशवह्निभिः' ग. । ४ सिद्धाश्वमारस्य' घ., 'सिद्धाश्व रामाश्व' ग. । ५ 'कर्षणा' घ. । ६ 'तन्मण्डले गतं पात्रं तत्रान्नमक्षयं भवेत्' ग., 'तन्मूढं गतपत्रं च तत्तान्नमक्षयं भवेत्' घ. ।

वापयेत्सर्वबीजानि तत्तद्रूपो नरो भवेत्।
फलं वा मुखनिक्षिप्तं तत्तद्रूपस्य साधकम्॥ ४६॥
[1]शणकार्पासबीजं यो मुखे यस्य च वापयेत्।
करबद्धेन तेनाथ तस्य रूपधरो भवेत्॥ ४७॥

इतिश्रीमद्गोविन्दाचार्यविरचिते रससारेऽनेकगुटिकादीनां साधनोपायो नाम विंशतितमः पटलः॥ २०॥

---

## अथैकविंशतितमः पटलः।

अथातः संप्रवक्ष्यामि क्रौञ्चयोगाननेकशः।
व्योमादिकानि सर्वाणि क्रौञ्चयोगे[2] द्रवन्ति च॥ १॥
शुभाश्च कल्कयोगाश्च सर्वाश्च पिष्टिकादयः।
क्रौञ्चयोगकृतं कर्म सफलं[3] च शुभं भवेत्॥ २॥
सागरे विहगा रम्या दीर्घवक्त्राश्चिरायुषः।
तेषां च चारयेत्सूतं विष्ठां तेषां च धामयेत्[4]॥ ३॥
[6]अक्षीणो मीलितो व्योम्ना धमनाद्द्वन्द्वतां व्रजेत्।
अण्डमध्यगतः सूतो धमनाद्द्वन्द्वतां व्रजेत्॥ ४॥
कुक्कुटाण्डरसेनैव रसराजं[8] विभावयेत्।
निपात्यः कूपिकायन्त्रे स्थिरतां भजते रसः[9]॥ ५॥
सर्वाण्डेषु च पानीयं श्वेतं पीतं द्विधा भवेत्।
श्वेतं पयः श्वेतकार्ये पीतकार्येषु पीतकम्॥ ६॥
अपादैर्द्विपदैश्चैव चतुष्पादैश्च संकुलैः।
जलजैः स्थलजैः सर्वैर्विज्ञेयो रसक्रमः॥ ७॥

---

१ 'श्वेतकार्पासबीजं च मुखे यस्य विनिक्षिपेत्' घ.। २ 'कौञ्चयोगाद्द्रवन्ति च' घ.। ३ 'सकलं' ग. घ.। ४ 'घनं' ग.। ५ 'धारयेत्' घ.। ६ 'अक्षयो मिलते हेम्ना धमनाद्द्वन्द्वतां व्रजेत्' घ.। ७ 'षण्मासाद्द्वन्द्वतां व्रजेत्' घ.। ८ 'रसं लोहं च भावयेत्' ग.। ९ 'स्थिरबद्धो भवेद्रसः' घ.।

तेषामामसृग्भिः पित्तैश्च कर्माणि स्युः पृथक् पृथक् ।
वक्ष्ये दिव्यौषधिकल्पं रसे चैव रसायने ॥ ८ ॥
अचिन्त्यमौषधीवीर्यं रसराजस्य बन्धने ।
क्रियामन्त्रविधानेन सबीजो बध्यते रसः ॥ ९ ॥
तृणं गुल्मो लता वल्ली वृक्षजाऽतिविसर्पिणी ।
षड्विधास्तु रसौषध्यो लक्षणेनावलोकयेत् ॥ १० ॥
(कृष्णे पक्षे प्रगलति दलं प्रत्यहं चैकमेकं
शुक्लेऽप्येवं प्रभवति च पुनर्लम्बमाना लता स्यात् ॥
तस्याः कन्दः कलयतितरां पौर्णिमायां गृहीतो
बद्ध्वा सूतं कनकसहितं देहलोहं विधत्ते ॥ ११ ॥
इयं सोमकला नाम्नी वल्ली परमदुर्लभा ।
अनया बद्धसूतेन्द्रो लक्षवेधी प्रजायते ॥ १२ ॥)
सोमवल्ली द्विधा ज्ञेया श्वेता रक्ता सकन्दका ।
रसो रक्तो भवेद्यस्यास्तिथिसंख्यादलानि च ॥ १३ ॥
शुक्ले पक्षे प्रजायन्ते कृष्णे च प्रपतन्ति हि ।
कृष्णपक्षक्षये चापि वल्ली भवति केवला ॥ १४ ॥
पूर्णिमायां गृहीतव्या रसबन्धे रसायने ।
जलजा पद्मिनी दिव्या स्थले तद्रूपधारिणी ॥ १५ ॥
तथाऽन्याऽजगरी नाम मण्डलैश्च विचित्रिता ।
अजगराकृतिः सा तु स्वल्पपत्रा पयस्विनी ॥ १६ ॥
गोनसी गोनसाकारा सक्षीरा रसबन्धिनी ।
त्रिजटा च शुकाकारा रसबन्धकरी भवेत् ॥ १७ ॥
रक्तक्षीरा भवेद्वल्ली ईश्वरी लोकविश्रुता ।
निम्बपत्राकृतिर्वल्ली भूतकेशी तु कथ्यते ॥ १८ ॥

१ 'लक्ष्यते ता विलोकयेत्' ग.। २ इमौ श्लोकौ क. ग. पुस्तकयोर्नोपलभ्येते। ३ 'कृष्णपक्षे पत्रहीना' घ.। ४ 'स्थलजा' घ.। ५ 'वने' घ.। ६ 'गोस्तनी गोस्तनाकारा' घ.। ७ 'तुङ्गकाकारा' घ.।

कृष्णवल्ली कृष्णमूला सक्षीरा रसबन्धिनी ।
रुदन्ती चणकाकारा स्रवन्ती तोयबिन्दुकान् ॥ १९ ॥
भूकदम्बा वृद्धमुण्डी सर्वत्र भुवि दृश्यते ।
लशुनी लशुनाकारा सक्षीरा रसबन्धिनी ॥ २० ॥
औषधी शम्बरा नाम स्नुहिपत्रा कपिप्रिया ।
सक्षीरा किंचिद्दूर्वाङ्गा[1] जायते च शिलातले ॥ २१ ॥
वाराही लोमशा कन्दे वल्ली सा गतपत्रका ।
अश्वत्थपत्रा सक्षीरा वल्ली या जातकी स्मृता ॥ २२ ॥
अल्पपत्री भवेदल्पा वल्ली नातिविसर्पिणी ।
केचोरनालकन्दा[2] सा त्रिपत्रा च पयस्विनी ॥ २३ ॥
अशोकनाम्नी सक्षीरा लता चाशोकसंनिभा ।
पुन्नागपत्रिका वल्ली सुगन्धक्षीरिणी भवेत् ॥ २४ ॥
नागिनी नाम सक्षीरा सपर्वा सर्पसन्निभा ।
वृक्षारोहा भवेद्वल्ली रसराजस्य बन्धिनी ॥ २५ ॥
छत्राकारा च सक्षीरा एकपत्रा सकन्दका ।
छत्री नामेति सा प्रोक्ता रसबन्धे महाबला ॥ २६ ॥
शम्बरी[3] नामतो ज्ञेया पीतक्षीरा वनोद्भवा[4] ।
नात्युच्चा गुल्मजातिश्च नन्दिकापत्रसन्निभा ॥ २७ ॥
मूलक्षीरफलैः पुष्पैः क्षणात्सूतकबन्धिनी ।
वालुकीपत्रसदृशी[5] पीतक्षीरा सकोमला ॥ २८ ॥
देवीनाम्नी लता सा तु रसबन्धे महौषधी ।
वज्रवल्ली सपुष्पा च स्नुहिपत्रा पयस्विनी ॥ २९ ॥
चित्रकौ रक्तकृष्णौ च क्षीरं कृष्णं करोति यः ।
कृष्णस्तु गोपनः ख्यातो शुभौ द्वौ रसबन्धने ॥ ३० ॥

---

१ 'किञ्चिद्दूर्वाभा' क. । २ 'कचौरकं नालकन्दा' घ. । ३ 'संवरी' ग., 'शबरी' घ. । ४ 'च नो ध्रुवा' क. । ५ 'पत्रसुदृशा' ग. ।

पालाशलतिका नाम पत्रैः पालाशसन्निभैः ।
कन्दे पीतरसं मुञ्चेद्रसराजस्य बन्धिनी ॥ ३१ ॥
नराजकृष्णपुष्पी च ईषद्रक्तदला लता ।
कार्कपक्षा भवेद्वल्ली कुमुदी स्थूलपर्वते ॥ ३२ ॥
नीलोत्पलसमाकारा नीलोत्पला च पर्वते ।
रजनी सहरित्पत्रक्षीरा कौमारिकन्दका ॥ ३३ ॥
सिंहिका नाम विख्याता श्वेतपत्रा पयस्विनी ।
कुलत्थपत्रवत्पत्रा क्षीरकन्दा च मेदिनी ॥ ३४ ॥
गजदन्ताकृतिः कन्दे क्षिप्ता क्षीरलता भवेत् ।
महौषधी जपापुष्पा स्नुहीपत्रा चतुर्दला ॥ ३५ ॥
गोकर्णपत्रा गोशृङ्गा कन्दक्षीरा नगोद्भवा ।
त्रिवल्ली रक्तमाला च नाम्ना खदिरपत्रिका ॥ ३६ ॥
पीता हरिद्रासंकाशा रसं रक्तं विमुञ्चति ।
तृणकन्दलतावृक्षा ज्योतीरूपा निशामुखे ॥ ३७ ॥
ज्वलन्ती पर्वते जातास्ते सर्वे रसबन्धकाः ।
मञ्जिष्ठा रसबन्धे च रक्तवल्ली विसर्पिणी ॥ ३८ ॥
ब्रह्मदण्डी भवेद्यष्टी क्षीरकन्दा रसौषधी ।
नाम्ना मधुतृणा दिव्या अपत्रा मधुगन्धिका ॥ ३९ ॥
पद्मदण्डी पद्मपत्रा पद्मकन्दा पयस्विनी ।
सोमदण्डी भवेत्पीता सक्षीरा पीतपुष्पिका ॥ ४० ॥
विजया नाम मञ्जिष्ठा चित्रपत्रदलावृता ।
आढकीपत्रसंकाशा जया शुक्ला विसर्पिणी ॥ ४१ ॥
जयानिभदला वल्ली त्रिकोणा कटुतिक्तका ।
शिखिकण्ठनिभैः पत्रैर्नाले चन्दनगन्धिका ॥ ४२ ॥

---

१ 'कालपर्णी' घ.। २ 'कुमुदस्य च पर्वते' घ.। ३ 'राजदन्ताकृतिः' घ.। ४ 'हेमदण्डी' घ.। ५ 'चित्रापत्रदला लता' घ.। ६ 'जयाचित्रदला' घ.।

स्वादे तिक्तं भवेन्मूलं नवनीतसुगन्धिकम् ।
सक्षीरा रक्तपुष्पा च श्रीनाम्नी च महौषधी ॥ ४३ ॥
त्रिलोहवेष्टितं मूलं वक्रस्थं गोपयेन्नरम्[1] ।
कीटमारी भवेद्वल्ली शिग्रुपत्रा पयस्विनी ॥ ४४ ॥
व्याघ्री नामेति विख्याता नीलपुष्पा सकन्दका ।
गरुडी पीतपुष्पा च निम्बपत्रा पयस्विनी ॥ ४५ ॥
तुम्बी च तुम्बीसदृशा सक्षीरा तरुगामिनी ।
कटुतुम्बी भवेदन्या सक्षीरा भूमिगामिनी ॥ ४६ ॥
मयूरस्य शिखा नाम्नी ज्ञातव्या रसबन्धिनी ।
मूलकाकारपत्रा च रक्तक्षीरा सपीतका ॥ ४७ ॥
नाम्ना हेमलता दिव्या पीतपुष्पा रसौषधी ।
आसुरी तुम्बिकापुष्पी पत्रैः पञ्चाङ्गुलैः समा ॥ ४८ ॥
पीतक्षीरा भवेदन्या रसराजस्य बन्धिनी ।
व्याघ्रपादलता दिव्या सक्षीरा रक्तपुष्पिका ॥ ४९ ॥
सप्तच्छदसमैः पत्रैः सप्तपर्णी भवेल्लता ।
गोमारी नाम विख्याता सक्षीरा खण्डपत्रिका ॥५०॥
धान्यकुस्तुम्बरीरूपा क्षीरिणी पीतपुष्पिका ।
दिव्यौषधिर्महावीर्या त्रिशूली नातिसर्पिणी ॥ ५१ ॥
त्रिदण्डी रक्तपत्रा च त्रिपत्रा सातैला भवेत् ।
भृङ्गाकारा भवेद्भृङ्गा पीतपुष्पा पयस्विनी ॥ ५२ ॥
समरी समराकारा क्षीरिणी कन्दसंयुता ।
वज्री वज्रसमा ख्याता क्षीरिणी कन्दवत्यपि ॥ ५३ ॥
रक्तपर्णी सिता चैव दिव्यौषधी महाबला ।
करवीरदला पुष्पा रक्तक्षीरा महौषधी ॥ ५४ ॥

---

१ 'पालयेन्नरम्' घ. ।　२ 'सुगन्धिका' घ. ।　३ 'सा लता' घ. ।

कुरण्टपत्रा सक्षीरा वज्रकन्दवती भवेत् ।
पीतमुस्तककन्दा च मुस्तरूपा पयस्विनी ॥ ५५ ॥
रक्तक्षीरा भवेद्वीरा वल्ली बिल्वदला शुभा ।
शणरूपा भवेद्वल्ली रोहिणी रसबन्धिनी ॥ ५६ ॥
बिल्वातकी भवेद्वल्ली ज्योतिष्पत्रा पयस्विनी ।
गोरोचनाऽरुणक्षीरा वल्ली गोरोचनप्रभा ॥ ५७ ॥
शल्या सकन्दपुष्पा स्याल्लता कन्दैकपत्रिका ।
शल्याकारा विशल्या च त्रिपत्रा कन्दवर्जिता ॥ ५८ ॥
कन्दक्षीरा नगोद्भूता शीघ्रं शल्यविमोचिनी ।
चतुःषष्टिः समाख्याता औषध्यः स्युः[1] सुपूजिताः ॥ ५९ ॥
शुभेऽह्नि शुभनक्षत्रे बलिपूजाविधानतः ।
क्षेत्ररक्षा प्रकर्तव्या अघोरेण दिशां तथा ॥ ६० ॥
शक्तिबीजैस्तथाऽघोरैर्गृह्णीयात् प्राप्तियोगतः[2] ।
याः काश्चिन्मुनिभिः प्रोक्ता औषध्यस्तु सहस्रशः ॥ ६१ ॥
ताभिर्युक्तिवशाज्ज्ञेयं तत्त्वज्ञै[3] रसबन्धनम् ।
गगनं शुल्बमाक्षीकं कनकं कान्ततालकम् ॥ ६२ ॥
दरदं विमलं चौरं कनटी गन्धटङ्कणम् ।
एतानि समभागानि तावद्भागं च सूतकम् ॥ ६३ ॥
दिव्यौषधिसमायुक्तं खल्वे कृत्वा विमर्दयेत् ।
अष्टाष्टकनियोगेन धमनाद्बन्धमाप्नुयात् ॥ ६४ ॥
ध्मातः संवत्सरैकं[4] तु अक्षयो हि भवेद्रसः ।
जारयेत्सारयेच्चं तु क्रमेण कोटिवेधकः ॥ ६५ ॥
तं गोलं धारयेद्वक्त्रे दिव्यं देहमवाप्नुयात् ।
छायाशुष्काऽथवा कार्या पञ्चाङ्गा च महौषधी ॥ ६६ ॥

---

१ 'शिवपूजितः' घ. । २ 'सिद्धियोगतः' घ. । ३ 'युक्तिज्ञैः' क. ।
४ 'संवत्सरैकं' घ. ।

सूक्ष्मचूर्णं ततः कृत्वा कांस्यपात्रे निधापयेत् ।
तद्रसेनैव संभाव्य सप्तवारं पुनः पुनः ॥ ६७ ॥
घृतेन मधुना सार्धं कर्षमेकं तु भक्षयेत् ।
दिव्यं देहमवाप्नोति जीवेचन्द्रार्कतारकम् ॥ ६८ ॥
जितेन्द्रियश्च लघ्वाशी शीतातपविवर्जितः ।

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे कौष्ठयोगपक्षकर्मदिव्यौषध्यधिकारो नामैकविंशतितमः पटलः ॥ २१ ॥

---

## अथ द्वाविंशतितमः पटलः ।

अथातः संप्रवक्ष्यामि यन्त्राणां नामनिर्णयम् ।
प्रथमं स्वेदनं यन्त्रं किन्नरं च द्वितीयकम् ॥ १ ॥
अथ पातनकं यन्त्रं डमरुं दीपनं तथा ।
दोलास्वेदं च विज्ञेयं नियामं च निरोधकम् ॥ २ ॥
चक्रराजं महायन्त्रं देगयन्त्रं च भूधरम् ।
यन्त्रं सोमानलं कार्यं जारणे दोलकं शुभम् ॥ ३ ॥
जारणे कूपिकायन्त्रं तृतीयं सिद्धिदं परम् ।
अथवा जलकूर्मं च स्थलकूर्मं तथैव च ॥ ४ ॥
भूगर्भे कन्दमध्ये च मूषायां च ततः परम् ।
भागैकं लोहकिट्टं च तुषदग्धद्वयं तथा ॥ ५ ॥
मृद्भागत्रयसंयुक्तं किंचित्कार्पाससंयुतम् ।
एकत्र कुट्टयेत्सर्वं मृत्तिका वज्रवद्भवेत् ॥ ६ ॥
तया मूषा प्रकर्तव्या त्रिविधा साधकेन तु ।
लोहकिट्टं तुषा दग्धाः शुक्तिचूर्णं च कर्कराः ॥ ७ ॥
एतानि समभागानि तावद्भागेन मृत्तिका ।

---

१ 'कान्तपात्रे' ग., 'काचपात्रे' घ. । २ 'वर्षमेकं' ग. घ. । ३ 'अधःपातनयन्त्रं च' ग. । ४ 'ढेकयन्त्रं' घ. । ५ 'भूगर्ते' ग. । ६ 'किंचित्कौपं प्रदापयेत्' क; 'किञ्चित्कूपं प्रदापयेत्' ग. । ७ 'मृत्तिकाचूर्णकर्कराः' घ. ।

( [1]मूषाबन्धः प्रकर्तव्यो धमनाद्वज्रतां व्रजेत् )
[2]कौर्पेन च समायुक्ता वज्र[3]मूषा च कथ्यते ॥ ८ ॥
( दग्धात्तुषात्तु भागैकं मृद्भागद्वयमेव च ।
[4]कूर्पेण च समायुक्ता वज्रमूषा च कथ्यते )
[5]काचचूर्णं च भागैकं समभागं तु मृत्तिका ।
मूषाबन्धः प्रकर्तव्यो धमनाद्वज्रतां व्रजेत् ॥ ९ ॥
दीर्घमूषा प्रकर्तव्या सारणे सत्त्वपातने ।
संपुटं रुन्धने कुर्यात् शरावं वाहने तथा ॥ १० ॥
सार्धहस्तप्रमाणेन [6]भुजा कार्या सुशोभना ।
वक्रनालं भुजाग्रेषु कोष्ठिमध्ये वितस्तितः ॥ ११ ॥
उच्छ्रयेण पृथुत्वेन कोष्ठिका षोडशाङ्गुला ।
तावद्द्वितीयकोष्ठं च तदूर्ध्वं [7]सारयेत्ततः ॥ १२ ॥
धमेत्तावद्दृढाङ्गारैर्यावत्सत्त्वं पतत्यधः ।
कदाचिन्न द्रवेत्सत्त्वं पिण्डीं [8]बद्ध्वा धमेत्ततः ॥ १३ ॥
संदंशिनी द्विधा कार्या शुकचञ्चुश्च वायसी ।
दीर्घसंदंशकश्चैव हस्तमात्रोऽतिपत्तलः ॥ १४ ॥
कणी द्विहस्तमात्रा तु धातूनां चालने हिता ।
रेतनी च वितस्त्यैव छिन्नकोऽष्टाङ्कुलः शुभः ॥ १५ ॥
द्विविधा अर्हिणी कार्या लघुः स्थूला सुशोभना ।
हत्थोडी द्विमुखा कार्या पत्राकारा च वर्तुला ॥ १६ ॥
द्वाभ्यां चतुर्भिरष्टाभिः सप्तभिर्दशभिर्मणैः ।
प्रकर्तव्या घणी भव्या धातूनां कुट्टने हिता ॥ १७ ॥

---

१ अयमर्धश्लोको घ. पुस्तक एवोपलभ्यते । २ 'कूर्पेण' ग. घ. । ३ 'साहि वज्रोपमा भवेत्' ग. । ४ 'रूप्यस्य चणसंयुक्ता वज्रमूत्स्नेति कथ्यते' ग. । अयं श्लोकः क. पुस्तके नोपलभ्यते । ५ 'इष्टिकाचूर्णभागैकं' ग. । ६ 'भुजाः' घ. । ७ 'स्रावयेत्ततः' ग. घ. । ८ 'बिडं दत्त्वा' क. । ९ '-[illegible]' ।

मल्ली भव्या प्रकर्तव्या धातोर्वमनहेतवे ।
लोहखल्वे चतुष्पादे पिण्डिका च दृढाङ्गुला ॥ १८ ॥
उन्मत्तकुसुमाकारा लघुः स्थूला च कर्तरी ।
योन्याकारा दृढा खल्वा शिलापट्टः सलोष्टकः ॥ १९ ॥
कर्परं बहुधा स्थाली लोहोदुम्बरमृण्मयी ।
वशंकुकः कुठारश्च कुशीकुट्टलवर्धनम् (?) ॥ २० ॥
अनुक्तान्यायुधान्येवं कुर्यात्तदनुसारतः[1] ।

इति श्रीमद्गोविन्दाचार्यविरचिते रसमारे यन्त्रमूषाधिकारो नाम द्वाविंशतितमः पटलः ॥ २२ ॥

---

## अथ त्रयोविंशतितमः पटलः ।

वक्ति श्रीधीरदेवाय साष्टाङ्गं प्रणिपत्य च ।
गोविन्दाचार्यनामाऽयं सच्छिष्यो भक्तिपूर्वकम् ॥ १ ॥
अष्टपत्रं लिखेच्चादौ पद्मयन्त्रं[2] विभूषितम् ।
सुगन्धीनि च पुष्पाणि नैवेद्यं च सुशोभनम् ॥ २ ॥
पद्ममध्ये न्यसेद्रुद्रमग्रतो विघ्ननायकम् ।
यन्त्रे यन्त्रे च योगिन्यः सिद्धाष्टकसमन्विताः ॥ ३ ॥
पश्चिमे तु रसेन्द्रं हि पूजयेत्सिद्धिपूर्वकम् ।
इन्द्रादींश्च दिशां पालान् पूजयेत् क्रमयोगतः ॥ ४ ॥
दिग्बन्धश्च प्रकर्तव्यः सर्वकार्ये[3] प्रयत्नतः ।
दीक्षां च कारयेत्तत्र मन्त्रेणानेन मन्त्रवित् ॥ ५ ॥
श्वेतेनैव च वस्त्रेण पट्टसूत्रं[4] च दापयेत् ।
सिद्धं प्रवेशयेत्तत्र शुक्लपक्षे पुटाञ्जलिम् ॥ ६ ॥
पूजयित्वा ततः सिद्धं मन्त्रेण च पृथक् पृथक् ।
तटयेद्बद्धपटहं मण्डलं दर्शयेत्तदा ॥ ७ ॥

---

१ 'कुर्याच्छास्त्रानुसारतः' घ. । २ 'लक्षत्रयविभूषितम्' क. । 'लतायन्त्रं विभूषितम्' घ. । ३ 'रसाचार्येण यत्नतः' घ. । ४ 'पट्टबन्धं' घ. ।

सर्वपापविनिर्मुक्तो [1]भवेदृष्टे च साधकः।
कुम्भो[2]दकं च संगृह्य पूजयित्वा कुमारिकाः ॥ ८ ॥
सुश्वेतकञ्चुकवृताः शुक्लगन्धानुलेपनाः।
[3]गुरुपादं च संपूज्य सुभक्त्या च प्रयत्नतः ॥ ९ ॥
अर्चयेच्छ्वेतकुसुमैस्तथा गन्धानुलेपनैः।
कलशं सहिरण्यं च वस्त्रयुग्मसमन्वितम् ॥ १० ॥
न रिक्तं कारयेन्मन्त्रं संपूर्णं घटमम्बुना।
जायते विपुला सिद्धिः साधकस्य न संशयः ॥ ११ ॥
अथान्यत्संप्रवक्ष्यामि सिद्धिदं मण्डलं परम्।

ॐनमो भगवते रुद्राय वज्रत्रिशूलधारक मम विघ्नं भञ्ज भञ्ज स्वाहा ॥ पट्टपूजा ॥ १२ ॥

पद्ममध्यस्थितं देवं श्वेतवस्त्रविभूषितम्।
खड्गबाणधरं देवं मण्डले शीघ्रमाह्वय ॥ १३ ॥

ॐनमो भगवते रुद्राय वज्रत्रिशूलधारक मम विघ्नं भञ्जय भञ्जय स्वाहा। शिवाय नमः। इति शिवपूजा ॥ ॐब्रह्मस्थाने गणेशाय नमः। ॐब्रह्म रुद्र रुद्र सर्वजनं वशं कुरु कुरु गणपतये नमः। ॐशान्ताय नमः। ॐरौद्राय नमः। ॐअनन्ताय नमः। ॐविष्णुरूपाय नमः। ॐहरबीजाय नमः। ॐपारदाय नमः। इति रसपूजाविधिः ॥ ॐसूर्यमण्डलाय नमः। ॐसुप्रभाय नमः। ॐसूर्यमण्डलाय वायुवेगाय नमः। ॐसूर्यमण्डलाय जलवासिने नमः। ॐसूर्यमण्डलाय जयाय नमः। ॐसूर्यमण्डलाय विजयाय नमः। ॐसूर्यमण्डलाय मेघमालिने नमः। इति योगिपूजा ॥ ॐमेघनादक्षेत्रपालाय नमः। ॐवायुवेगाय नमः। ॐकरम्बकाय नमः। ॐअग्नये नमः। इति दिक्पाल-

---

१ '[illegible] च जायते' घ.। २ 'कुम्भोदकं' घ.। ३ 'गुरुपादौ' घ.।

पूजा ॥ ॐश्वेतहृदयाय नमः । ॐश्वेतहस्ताय नमः । ॐसर्व-
विघ्नप्रश्रवपारदे शिरसे स्वाहा । इति शिरोरक्षामन्त्रः ॥ ॐवद
वद वादिने नमः ॥ ॐघंटमन्त्रः—ॐघं घटसहस्राणि सिंह-
वाहिनी श्रीः स्वाहा ॥ ॐदीक्षामन्त्रः । ॐहूं अन्धपट्टछोट-
नमन्त्रः । ॐकुमारीपादुकाभ्यां नमः । ॐगुरुपादुकाभ्यां
नमः। वद वद वाग्वादिन्यै ऐं स्वाहा॥ अथाघोरमन्त्रः। ॐघोरे
क्रीं अघोरे ह्रीं अघोरतरे ह्रीं सर्वतः[2] संरक्ष ह्रां ह्रीं हूं क्षुं रुद्ररूप
हुं फट् स्वाहा । अघोरमन्त्रः ॥ प्रस्फुर २ घोर २ तन२ चट २
दह२ वम२ घातय २ ह्रां ह्रीं क्रूं अघोरास्त्राय हुः क्षुः हुं फट्
स्वाहा । अघोरास्त्रम् ॥ १४ ॥

सिद्धलोके महोत्साहे विमानैर्मण्डिताम्बरे ।
जयशब्दं प्रकुर्वन्ति सिद्धा देवाश्च खेचराः ॥ १५ ॥
रत्नजीर्णस्तु सूतेन्द्रः साधकैः साधितो यदा ।
लक्षसंख्यं जपेन्मन्त्रमघोरं सुसमाहितः ॥ १६ ॥
होमं कृत्वा दशांशेन खण्डाज्यमधुपायसैः ।
दशांशं तर्पणं होमात्तद्दशांशाभिषेचनम् ॥ १७ ॥
अभिषेकदशांशेन दद्याद्ब्राह्मणभोजनम् ।
रसेन्द्रात्काञ्चने जाते दशांशा भूरिदक्षिणा ॥ १८ ॥
जुहुयात्सर्वदेवेभ्यः पञ्चामृतयुतं रसम् ।
[3]गणेशक्षेत्रपालेभ्यो भैरवेभ्यस्तथैव च ॥ १९ ॥
[4]योगिनीभ्यश्च सिद्धेभ्यो दिक्पालेभ्यो विशेषतः ।
दद्यात्तेभ्यश्च सूतेन्द्रं ये चान्ये विघ्नकारकाः ॥ २० ॥

---

१ 'अथ पद्ममन्त्रः । शतकोटि सहस्राणि सिंहवादिनी श्रीं स्वाहा' घ. । २ 'सर्वतः सर्वतः सर्वे सर्वे' घ. । ३ 'आसक्तिपूर्वं कर्तव्यं भैरवादिप्रपूजनम्' घ. । ४ 'योगिन्यश्च ससिद्धांश्च पूजयेच्च विशेषतः' घ. ।

[1]गणेशः क्षेत्रपालश्च भैरवो योगिनीकुलम्।
होमान्ते तर्पयेत्तांश्च दिक्पालान् सिद्धखेचरान्॥ २१॥
पयसा सर्पिषा चैव मधुना पायसेन तु।
शिष्येभ्यः काञ्चनं देयमाचार्येण यदृच्छया॥ २२॥
गुरुदत्तं च गृह्णीयादन्यथा न[2] कदाचन।
शिवस्य पूजनं कृत्वा रसराजस्य पूजनम्॥ २३॥
गुरुं च प्रणिपत्यादौ शिवं सूर्यं च चण्डिकाम्।
गणेशं गिरिजां भक्त्या भूयो भैरव[3]मण्डलीम्॥ २४॥
अघोरं च न्यसेद्देहे अघोरास्त्रं च विन्यसेत्।
अनुलोमविलोमेन त्रिवारं च पुनः पुनः॥ २५॥
एवं सम्यग्विधानेन न विघ्नैः परिभूयते।
पादांशव्योमजीर्णं च कान्तजीर्णं [6]रसं तथा॥ २६॥
देहशुद्धिं ततः कृत्वा वमनस्नेहरेचनैः।
सैन्धवं घृतसंयुक्तं पिबेत्प्रातर्दिनत्रयम्॥ २७॥
प्रत्यहं रक्तिकामात्रं वर्षमेकं तु भक्षयेत्।
क्षेत्रशुद्धिमवाप्नोति देहं क्रमति पारदः॥ २८॥
महारसस्ततः सेव्यश्चाघोरेणाभिमन्त्रितः।
भक्षयेद्रक्तिमात्रं तु घृतेन मधुना सह॥ २९॥
संसेव्यः क्रमवृद्ध्या तु यावत्सप्तदिनावधि।
एवं मुक्त्वा पुनः सेव्यो यावद्वर्षं पुनः पुनः॥ ३०॥
प्रत्यहं क्रामणं कार्यं रसराजस्य सेवने।

---

१ 'गणेशक्षेत्रपालेभ्यो भैरवेभ्यस्तथैव च' घ.। २ 'दोषभाक् भवेत्' घ.। ३ 'भैरवमञ्जसा' घ.। ४ 'एवं न्यासविधानेन अविघ्नं'। ५ '–जीर्णस्य' घ.। ६ '–रसस्य च' घ.। ७ 'रिक्तवान्तस्य' घ.। ८ 'भक्षयेद्र-क्तिकामात्रं' घ.। ९ 'एवमुक्तावचः' घ.।

अन्ये ये च रसाः सर्वे लोहवेधस्य कारकाः ।
सेवनीयाः प्रयत्नेन सेविताः सिद्धिदाश्च ते ॥ ३१ ॥

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे महारससेवनाधिकारो नाम त्रयोविंशतितमः पटलः ॥ २३ ॥

---

## अथ चतुर्विंशतितमः पटलः ।

अतः परं प्रवक्ष्यामि[1] रसायनमनुत्तमम् ।
नानाव्याधिप्रशमनं बलवृद्धिकरं परम् ॥ १ ॥
शुद्धसूतस्य भागैकं हेमभागसमीकृतम् ।
द्विगुणं गन्धकं दत्त्वा दिव्यौषधिविभावितम् ॥ २ ॥
चक्रराजेन तं पक्त्वा यावदेवं[2] स्थिरायते ।
भृङ्गराजेन संभाव्य बध्नीयाद्गुटिकां शुभाम् ॥ ३ ॥
हेमेन्द्ररसनामाऽयं कामलादिगदापहः ।
निहन्ति सकलान् रोगान् क्रामणेन समायुतः ॥ ४ ॥
तारं कान्तं व्योमैव[3]ङ्गं तावद्भागं च सूतकम् ।
गन्धकेन समायुक्तं चक्रयन्त्रे स्थिरीकृतम् ॥ ५ ॥
क्षुरको[4] गोक्षुरः कच्छुः शतमूली बलात्रयम् ।
एभिर्बद्धा वटी श्रेष्ठा सुन्दरी तारसंज्ञका ॥ ६ ॥
रमेद्रामाशतं रात्रौ दुर्दण्ड[5]विहितेन्द्रियः ।
मृतनागसमं सूतं समगन्धेन मर्दयेत् ॥ ७ ॥
चक्रराजे स्थिरीकृत्वा विषं दद्यात्कलांशकम् ।
गुटिका भृङ्गराजेन नागेन्द्रोऽयं रसः स्मृतः ॥ ८ ॥
अशेषव्याधिविध्वंसी क्रामणेन स[6]मन्वितः ।
मृतशुल्बसमं सूतं गन्[7]धं च क्रमपाचितम् ॥ ९ ॥

---

१ 'अथातः संप्रवक्ष्यामि' घ. । २ 'यन्त्रराजेन संपाच्य यावदेष' ग. । ३ –'तारं चापि मृतं व्योम' घ. । 'तालकान्तमृतव्योम' ग. । ४ 'इक्षुरो' ग. । ५ 'उद्दण्ड'–ग. । ६ 'महाबलः' क. । ७ 'सगन्धं चक्रपाचितम्' घ. ।

संभाव्य खदिरकाथे मञ्जिष्ठादिगणेऽपि वा ।
भृङ्गकेण वटी बद्धा कुष्ठाद्युदरनाशिनी[1] ॥ १० ॥
ताम्रेन्द्रो नाम विख्यातः कफवातहरः स्मृतः ।
एवं रसौ प्रकर्तव्यौ वङ्गेन्द्रलोहसुन्दरौ ॥ ११ ॥
रसोपरसलोहानि धान्याभ्रादिविशेषतः ।
गन्धत्रययुतं सूतं मारयेत्पुटयोगतः ॥ १२ ॥
पचेत्तं चक्रयन्त्रे च गन्धकेन समन्वितम् ।
विषं कलांशकं दत्त्वा दीपनौषधिभावितम् ॥ १३ ॥
पित्तैश्चोपविषैर्भाव्यं वटी माषप्रमाणिका ।
ख्यातो[2] रसेश्वरः सूतः सन्निपातविनाशनः ॥ १४ ॥
भिषग्भिश्च प्रदातव्यं शीतस्नानं च रोगिणे ।
अगदः सर्पदष्टस्य मृतसंजीवनः परः ॥ १५ ॥
क्रामणेन समायुक्तः सर्वव्याधिविनाशनः ।
नागवङ्गविषैर्युक्तं विना व्याधिं न सेवयेत् ।
(सर्वव्याधिहरो[4] नाम पुरा रुद्रेण भाषितः[3] ॥ १६ ॥)

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे रसायनकथनं नाम चतुर्विंशतितमः पटलः ॥ २४ ॥

---

## अथ पञ्चविंशतितमः पटलः ।

अतो[5]ऽहं संप्रवक्ष्यामि धातूनां मारणं परम्[6] ।
मारणं सर्वसत्त्वानां शत्रुमित्रत्वकारकम् ॥ १ ॥
गन्धकेन समायुक्तं सूतं चक्रेण मारयेत् ।
स्थिरत्वे च समापन्ने सर्वकर्मसु योजयेत् ॥ २ ॥

---

१ 'कुष्ठदद्रुविनाशिनी' ग. । २ 'नाम्ना' ग. घ. । ३ 'अयमर्धश्लोको घ. पुस्तक एवोपलभ्यते । ४ 'सर्वव्याधिहरो' घ. । ५ 'अथातः' घ. । ६ 'धातुमारणमुत्तमम्' घ. ग. ।

पलाशक्षारभागैकमाटरूषसमन्वितम्।
संस्थाप्य खर्परे नागं पादांशक्षारयोजितम्॥ ३॥
आटरूषकदण्डेन चालयेच्च पुनः पुनः।
दिनत्रयं प्रकर्तव्यं नागभस्म सुशोभनम्॥ ४॥
स्वाङ्गशीतं तदुत्तार्य जलेन क्षालयेत्ततः।
शिलासत्त्वं च पादांशं दत्त्वा खल्वे विमर्दयेत्॥ ५॥
कुमार्या भावितं शुष्कं त्रिंशल्लघुपुटैः पचेत्।
नागस्य मारणं श्रेष्ठं सर्वकर्मसु योजयेत्॥ ६॥
चिञ्चाश्वत्थत्वचाक्षारं वङ्गात्पादांशयोजितम्।
चिञ्चादण्डेन संचाल्य वङ्गभस्म प्रजायते॥ ७॥
पादांशं तालकं सत्त्वं मृतवङ्गे नियोजयेत्।
मूत्राम्लस्वर्जिकैर्भाव्यं विंशल्लघुपुटैः पचेत्॥ ८॥
नागवङ्गस्य चूर्णं तु पुटैर्द्वादशभिर्भवेत्।
हेमतारं प्रयुञ्जीत रसो व्याधिविनाशकः॥ ९॥
माक्षिकं गन्धसंयुक्तमम्लेन सह मर्दयेत्।
लेपयेत्तारपत्राणि शोषयित्वा तु संपुटे॥ १०॥
पुटं चोत्पलकैर्दद्यात्तारभस्म प्रजायते।
माक्षिकस्य रसं सत्त्वं पादांशसमगन्धकम्॥ ११॥
मृततारयुतं पक्कं पुटैर्भस्मवरं भवेत्।
हिङ्गुलं गन्धकं सूतं नवसारं मनःशिला॥ १२॥
अम्लेन मर्दयेत्सर्वं हेमपत्राणि लेपयेत्।
छाणकैश्च पुटो देयो हेमभस्म प्रजायते॥ १३॥
मृतस्वर्णस्य भागैकं भागैकं नागभस्मनः।
अष्टांशं तारभस्मापि मीनाक्षीरसभावितम्॥ १४॥

---

१ 'विंशल्लघुपुटैः' ग.। २ 'चूर्णं' घ.। ३ 'सूतं' ग.।

पचेद्गजपुटैश्चूर्णं हेमभस्म प्रजायते।
गन्धकं रससंयुक्तमर्कक्षीरेण भावयेत् ॥ १५ ॥
लेपयेच्छुल्वपत्राणि पुटैर्भस्म प्रजायते।
एवं च पुटयेद्ब्राह्मीं[1] रसगन्धेन मारयेत् ॥ १६ ॥
तीक्ष्णं वा कान्तलोहं वा सूक्ष्मं कृत्वा विचक्षणः।
[2]पादांशगन्धसंयुक्तं त्रिफलाक्वाथभावितम् ॥ १७ ॥
पुटानि लघु दीयन्ते सप्तवारं पुनः पुनः।
जायते मृतलोहं च पुटैर्द्वादशभिर्दृढैः ॥ १८ ॥
गन्धकं तालसंयुक्तमर्कक्षीरेण भावयेत्।
लेपयेत्कांस्यपत्राणि पुटैर्भस्म प्रजायते ॥ १९ ॥
सर्वसत्त्वसमं सूतं गन्धकेन समन्वितम्।
मारयेच्चक्रयन्त्रेण धातुमारे नियोजयेत् ॥ २० ॥
त्रिगन्धैर्[3]विदुग्धेन व्योमसत्त्वस्य मारणम्।
मृतनागं मृतं वङ्गमष्टांशं मृतसूतकम् ॥ २१ ॥
अहिमारेण संभाव्य दृढैर्गजपुटैः पचेत्।
मृतवङ्गं तथा नागमष्टांशं मृतसूतकम् ॥ २२ ॥
मुनिपुष्परसेनैव भाव्यं गजपुटैः पचेत्।
मृततारं दशांशेन शुल्बमष्टांशसूतकम् ॥ २३ ॥
व्याघ्रीचित्रेण संभाव्य तारभस्म पुटैर्वरम्।
मृतशुल्बं मृता ब्राह्मी रुद्रांशाऽष्टांशकं रसम् ॥ २४ ॥
मारणौषधिभिर्भाव्यं सगन्धं पुटयेत्पुटैः।
मृतलोहसमं वङ्गं[4] पुटैर्द्वादशभिः पचेत् ॥ २५ ॥
सर्वेषु धातुमारेषु गन्धो योज्यः पुटे पुटे।
धातुमारस्तदा शुद्धो निर्मलो दृश्यते यदा ॥ २६ ॥

---

१ ब्राह्मी अभ्रकमिति; 'ब्राह्मीरसगन्धेन' घ.। २ 'पादांशहंससंयुक्तं' घ. 'पादांशरफसंयुक्तं' ख.। ३—'वटदुग्धेन' ख. घ.। ४ 'बन्धं' क.।

रसस्य रञ्जने योज्यो बीजानां वपने शुभः।
हेमाभ्रं वाहयेच्चूर्णं धातुमारस्य षड्गुणम् ॥ २७ ॥
मृतधातुं नियुञ्जीत रसायनविधौ सदा।
माक्षिकेण हतो धातुस्तारवापाद्दलं शुभम् ॥ २८ ॥

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे धातुमारणप्रयोगाधिकारो नाम पञ्चविंशतितमः पटलः ॥ २५ ॥

---

## अथ षड्विंशतितमः पटलः।

[1]अथातः संप्रवक्ष्यामि देहक्रामणमुत्तमम्।
रसेन्द्रं सेवयेत्[2]प्रातर्घृतेन मधुना सह ॥ १ ॥
अप्रवासी वसेद्गेहे शीतातपविवर्जितः।
ग्रीष्मकाले हितं पथ्यं सस्नेहं मारुतापहम् ॥ २ ॥
हेमन्ते सर्पिषा युक्तमातपे शीतलं च यत्।
पानानि च विचित्राणि शीतानि मधुराणि च ॥ ३ ॥
शर्करां दाडिमं द्राक्षां नारङ्गमिक्षुमुत्तमम्।
षष्टिकानां [3]पिबेत्तोयं सुशीतं शर्करायुतम् ॥ ४ ॥
पायसं मधुसर्पिश्च भुञ्जीत शालिषष्टिकम्।
लघ्वाशी मधुराहारो जितात्मा च विमत्सरः ॥ ५ ॥
देवध्यानरतो नित्यं सदानन्दपदस्थितः।
सहायैः शोभनैर्युक्तो रसराजं तु सेवयेत् ॥ ६ ॥
कटुतिक्तकषायाम्लक्षारतैलादिसेवनम्।
व्रतोपवासकृच्छ्राणि वर्जयेद्रससेवने ॥ ७ ॥
चन्दनोद्वर्तनं कार्यमुष्णकाले च साधकैः।
वर्षाकाले प्रकर्तव्यं सुगन्धतैलमर्दनम् ॥ ८ ॥

---

१ 'अतः परं प्रवक्ष्यामि' ग.। २ 'प्रातःकाले' ग. घ.। ३ 'पिबेत्पेयां सुशीतां शर्करायुताम्' ग.।

नृत्यवाद्यकथागीतैर्दिनं कौतूहलैर्नयेत् ।
इत्थं क्रामति सूतेन्द्रो महासिद्धिप्रदो भवेत् ॥ ९ ॥
यदि न क्रमते सूतस्तदा कुर्याच्च शोधनम् ।
[1]अनेकमाससंसर्गः कर्तव्यः साधकेन तु ॥ १० ॥
[2]यच्च यच्च वरं स्त्रीणां साधनं तच्च कारयेत् ।
योगैर्नानाविधैर्दिव्यैर्वशीकृत्वा तु कामयेत् ॥ ११ ॥
क्रीडमानस्य वीरस्य दिव्याभिस्तु कदाचन ।
यदि गर्भस्य संभूतिस्तदा तन्मृतिरेव च ॥ १२ ॥
दिव्यां स्त्रियमदिव्यां च वन्ध्यां कृत्वा तु कामयेत् ।
सिद्धैश्च स्वकुले कार्या समयेष्वप्रसूतिका ॥ १३ ॥
अन्यथा सिद्धिहानिः स्याद्भ्रश्यन्ति हि साधकम् ।
शतवेधी च यः सूतः सेवयेद्रक्तिकाद्वयम् ॥ १४ ॥
संवत्सरप्रयोगेण ततः सिद्धो भवेन्नरः ।
सहस्रवेधी यः सूतस्तद्रक्तीं भक्षयेन्नरः ॥ १५ ॥
एकद्वित्रिचतुर्वर्षैर्महासिद्धिमवाप्नुयात् ।
रक्त्यर्धं दशसाहस्रे तदर्धं लक्षवेधके ॥ १६ ॥
तस्यार्धं दशलक्षे तु तदर्धं कोटिवेधके ।
अतः परं प्रयोक्तव्या राजिकै[3]का सुशोभना ॥ १७ ॥
सप्तमात्रा मया ख्याताः साधकानां हिताय वै ।
एवं यः साधयेत् सूतं सिद्धं देहमवाप्नुयात् ॥ १८ ॥
तन्मूत्रस्वेदनिष्ठीवपुरीषैर्लेपयेच्च यत् ।
तल्लोहं हेमतामेति नात्र कार्या विचारणा ॥ १९ ॥
अमरप्रख्यो वीरः शस्त्राद्यैर्नैव बोध्यते ।
न विघ्नैः परिभूयेत अभिचारादिकर्मभिः ॥ २० ॥

---

१ 'अनेकमांससंसर्गः' घ. । २ 'पुमानुत्तमस्त्रीणां' घ. । ३ 'राजिकार्धं सुशोभनम्' घ. । ४ 'भिद्यते' घ. ।

कामभोगरतश्चैव कालादपि न बिभ्यति ।
दिव्यकल्पाननेकांश्च शिवलोके महीयते ॥ २१ ॥
पुत्रमित्रकलत्रैश्च बान्धवैः सह संयुतः ।
सशिष्यः सिद्धिमाप्नोति शिवलोके महीयते ॥ २२ ॥
अनेनैव शरीरेण ये च सिद्धिमुपागताः ।
ते वन्द्या रससिद्धाश्च सर्वदेवैः प्रपूजिताः ॥ २३ ॥
खन्यवादे महाक्लेशः क्षेत्रवादे तथैव च ।
मन्त्रे च बहुविघ्नानि रससिद्धिस्तु शोभना ॥ २४ ॥
महाक्लेशं प्रकुर्वन्ति मूढा द्रव्यस्य हेतवे ।
रसेन्द्रं नैव जानन्ति मृत्युदारिद्र्यनाशनम् ॥ २५ ॥
बीजात् प्ररोहो भवति फलं पुष्पं च दृश्यते ।
स्त्रीपुंसोर्गर्भसंभूती रससिद्धिर्न संशयः ॥ २६ ॥
बालत्वे च महद्दुःखं कौमारे च तथैव च ।
तारुण्ये च महादुःखं वृद्धो मृत्युवशंगतः ॥ २७ ॥
असारोऽयं च संसारो महादुःखकरो नृणाम् ।
एतं[1]ज्ज्ञात्वा प्रकर्तव्यं रसंराजस्य सेवनम् ॥ २८ ॥
येन सेवितमात्रेण अमरैः सह मोदते ।
एतच्छास्त्रं मया ख्यातं संक्षेपा[2]च्च सविस्तरम् ॥ २९ ॥
सर्वकामप्रदं चैव लोहदेहस्य साधनम् ।
मोढज्ञातिसमुत्पन्न आचार्यसहदेवकः ॥ ३० ॥
सर्वशास्त्रप्रवीणोऽसौ मन्त्रसिद्धो द्विजोत्तमः ।
तदुत्पन्नस्तु यः सूनुः सुरादित्यः कृती भुवि ॥ ३१ ॥
तत्संभवः सुतः ख्यातो गोविन्दः शिववन्दकः ।
शिष्यः श्रीधीरदेवस्य रसकर्मसु कोविदः ॥ ३२ ॥

---

१ 'एतद्गीत्या' ग.; 'एतत्प्रोक्त्या' घ.। २ 'संक्षेपान्न तु विस्तरात्' घ.।

अनुभूयेदमखिलं शास्त्रं तेन विनिर्मितम् ।
कृपया धातुवादीनां दीनत्वस्य विनाशनम् ॥ ३३ ॥
अन्तर्वेदीसमुत्पन्नो ज्ञात्वा सारस्वतो द्विजः ।
अभयपालपुत्रोऽसौ धीरदेवो[1] हि वादिराट् ॥ ३४ ॥
जारणान्तमिदं कर्म प्रोक्तं श्रेष्ठं च यत्स्फुटम् ।
अनुभूतं च यत्सर्वं धीरदेवप्रसादतः ॥ ३५ ॥
निर्मथ्य सर्वशास्त्राणि अनुभूय पुनः पुनः ।
बौद्धं मतं तथा ज्ञात्वा रससारः कृतो मया ॥ ३६ ॥
अनेककर्मसंयुक्तो नानामतविभूषितः ।
क्रियया पूरितः सर्वो रससारः सुदुर्लभः ॥ ३७ ॥
किमन्यैर्बहुभिः शास्त्रैर्बहुभिश्च रसायनैः ।
रससारं च यो वेत्ति वादिराजः स उच्यते ॥ ३८ ॥
यः कोऽपि साधयेद्धीरः कर्ममेकं सुशोभनम्[2] ।
कुर्यात्सकनकां पृथ्वीं सशैलवनकाननाम् ॥ ३९ ॥
इदं च परमं गुह्यं रक्षणीयं प्रयत्नतः ।
कुशिष्येभ्योऽन्यशिष्येभ्यो न देयं यस्य कस्य चित् ॥४०॥
व्यसनोपहतायैव त्वरितं फलकाङ्क्षिणे ।
भगवन्निन्दकानां च गोपनीयं प्रयत्नतः ॥ ४१ ॥
देवद्विजार्चने नित्यं गुरौ भक्तो दृढव्रतः ।
तस्मै शिष्याय दातव्यं पूर्वमेतच्छिवोऽब्रवीत् ।
सुभक्ताय सुशिष्याय विद्यादानं च कारयेत् ॥ ४२ ॥
पातु नो रसराजेन्द्रः सिद्धिं यच्छतु साधके ।
शिवप्रसादान्निर्विघ्नं रससारः कृतो मया ॥ ४३ ॥
प्रसीदतु रसेन्द्रोऽसौ शिवः सिद्धिं प्रयच्छतु ।
यत्प्रसादान्मयाऽपूर्वं रससारः कृतः शुभः ॥ ४४ ॥

---

१ 'वीरदेवो' ग.। २ 'कनकं रसशोभनम्' ग.।

एकधा दशधा चैव शतधा तु सहस्रधा।
मत्प्रणीतेषु योगेषु सिद्धिर्ज्ञेया विचक्षणैः॥ ४५॥
यदुक्तं सर्वशास्त्रेषु तदिहास्त्यखिलं स्फुटम्।
यदिहास्ति तदन्यत्र नैवास्ति रसकर्मणि॥ ४६॥

इति श्रीमद्गोविन्दाचार्यविरचिते रससारे महारससेवाधिकारो नाम षड्विंशतितमः पटलः॥ २६॥

समाप्तोऽयं रससारः।

# रससारान्तर्गतविषयानुक्रमणिका ।

# रससारपाठसंशोधनम् ।

| अपपाठः । | सुपाठः | पृ. | पं. |
|---|---|---|---|
| विरचितो । | विरचितो | १ | २ |
| नः | नमः | २ | २४ |
| हंसाहंसी | हंसाहंसि | ३ | ४ |
| -श्वखेगतिः | -श्व खे गतिः | ,, | १५ |
| विमला | विमलं | ४ | ३ |
| -श्वेतक्तरादिभेदतः | -श्वेतरक्तादिभेदतः | ,, | ६ |
| मुक्ताफलानि च | मुक्ताफलान्यथो | ,, | १० |
| निस्पृहाः | निःस्पृहाः | ,, | १५ |
| निस्पृहाः | निःस्पृहाः | ,, | २३ |
| वतुर्विंशति- | चतुर्विंशति- | ६ | ६ |
| औषधीनां[1] | ओषधीनां | ७ | ७ |
| कालिका नागसंभूता नाग- | नागसंभूतकापालीनाग- | ८ | २ |
| -त्संस्कारो | -त्संस्काराधिकारो | ,, | २३ |
| वाससो | वाससा | ९ | २ |
| रसेन निम्बुजेन च | निम्बुजेन रसेन च | ,, | १६ |
| दुग्धिद्वयेन | दुग्धद्वयेन | १० | १ |
| सुन्दराम् | सुन्दरम् | ११ | १२ |
| तल्लेपयेन्मुखम् | लिम्पेच्च तन्मुखम् । | ,, | २३ |
| दीपाग्नि | दीप्ताग्नि | ,, | २५ |
| सूतस्तल्लग्न | सूतोऽसौ लग्न | ,, | २६ |
| कर्तव्यं ऊर्ध्व- | कर्तव्यमूर्ध्व- | १२ | १ |
| निंबूकस्य | निम्बुकस्य | ,, | १५ |
| -त्फला | -त्फलाः | १३ | २६ |
| स्थाप्यं एक- | स्थाप्यमेक- | १४ | १ |
| स्मृत्स्नया | मृत्स्नया | ,, | ७ |
| सूतरजस्य | सूतराजस्य | ,, | १० |
| किंचित्प्रदाव्यं | किंचित्प्रदातव्यं | ,, | २१ |

१ एवमन्यत्रापि यत्र 'औषधि'शब्द उपलभ्येत तत्र 'ओषधि' शब्द एव पठनीयः ।

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| गृह्ण मम | गृह्णीष्व मे | १५ | २ |
| निषेकस्तेषु | निषेकस्तैस्तु | ,, | १९ |
| त्रिगुणसुत्तार्य | त्रिगुणमुत्तार्य | १६ | १२ |
| निरुन्ध्य | निरुध्य | १६ | २० |
| मूषैकैका | मूषा चैका | १७ | १ |
| वज्रार्कपयसा | वज्र्यर्कपयसा | १८ | २० |
| अलयस्तथा | बलयस्तथा | १९ | ६ |
| स्थिरीकुर्याद्विचक्षणः | स्थिरीकुर्याच्च सत्त्वकम् | ,, | ७ |
| अथ | ‘अथ | ,, | २५ |
| मध्वाम्लेन | मध्वम्लेन | २० | २१ |
| भावयेत | भावयेत् | २१ | २१ |
| द्रुतिर्भवति | द्रुतं भवति | २२ | ६ |
| पञ्चाशद्भावना कार्या | पञ्चाशद्भावनाः कार्याः | ,, | १८ |
| विंशतिः | विंशतिम् | २३ | २ |
| ,, | ,, | ,, | ५ |
| नलिनीबीजकम् | नलिनबीजकम् | २४ | २५ |
| द्रुतिपात नाना- | द्रुतिपातनाना- | २५ | २० |
| तदाऽऽस्थाप्य | तदाऽऽस्थाप्यं | २६ | ८ |
| निरुन्ध्य | निरुध्य | ,, | २० |
| मालतिरससंप्लुतौ | मालतीरससंप्लुतौ | २७ | २३ |
| क्षारद्रावबीड- | क्षारद्रावबिड- | २८ | ९ |
| पद्मरागं कुरुविन्दं | कुरुविन्दं पद्मरागं | २९ | २ |
| ‘सवत्रैवं’ | ‘सर्वत्रैवं’ | ,, | २७ |
| क्षारैरोषधिजैस्तथा | क्षारैरोषधिजैस्तथा | ३० | ९ |
| चत्वारिंशद्दिनावधि | चत्वारिंशद्दिनावधि | ,, | २३ |
| मेषशृङ्गं समाक्षिकं | समाक्षिकं मेषशृङ्गं | ३१ | १७ |
| निलिका | नीलिका | ,, | २१ |
| वन्ध्यकां | वन्ध्यकां | ,, | २५ |
| शिलाजितु | शिलाजतु | ३२ | ९ |
| रुक्मव्योमरविर्नागं | रुक्मं व्योम रविर्नागं | ३३ | ११ |
| रुक्मव्योमरविर्हंसं | रुक्मं व्योम रविर्हंसं | ,, | २६ |
| कासीसं | कासीसं | ३४ | १ |

| अपपाठः | सुपाठः | पृ० | पं० |
|---|---|---|---|
| राहंसमाक्षिकम् | रा हंसमाक्षिकम् | ,, | ५ |
| रा काह्वी | राः काह्वी | ,, | १० |
| रा काशी( स )चौरहिङ्गुलं | कासीसं चौरहिङ्गुलम् | ,, | ,, |
| विमला | विमलं | ,, | १४ |
| शतावधिः | शतावधि | ३५ | १ |
| भवेद्धेतुरक्ती | भवेद्धेमरक्ती | ३६ | १० |
| सछिद्रं | सच्छिद्रं | ३८ | १५ |
| चत्वारिंशतिभागेन | चत्वारिंशद्विभागेन | ३९ | २० |
| निरुन्ध्य | निरुध्य | ४० | ३ |
| केशाश्वुच्छुन्दरीवसा | केशारछुच्छुन्दरीवसा | ४५ | १४ |
| 'अयं | अयं | ४६ | २६ |
| रसस्यैकोगन्ध- | रसस्यैको गन्ध- | ४९ | १ |
| बीजाभ्रवन्वितं सूतं | सूतं बीजाभ्रसंबद्धं | ,, | ९ |
| -दिनावधिः | -दिनावधि | ,, | २२ |
| लेपयद्वन्धनोषधैः | लेपयेद्वन्धनौषधैः | ५० | १८ |
| सुखसाध्यकेः | सुखसाध्यके | ,, | २१ |
| द्या- | 'द्या- | ,, | २३ |
| 'पशुयुक्तं | 'पशुयुक्तं' | ,, | २५ |
| -निबद्धस्य | -निबद्धस्तु | ५१ | १ |
| -प्रयोगाश्चद्रुति- | -प्रयोगाश्च द्रुति- | ,, | १९ |
| अरक्तवर्ण- | आरक्तवर्ण- | ५२ | ४ |
| पाचका | पाचको | ५४ | १४ |
| लाङ्गली | लाङ्गली | ५५ | २ |
| संसार्य | संसार्यः | ५७ | १६ |
| अंशाशेन | अंशांशेन | ,, | २० |
| संकम्पोऽतिभ्रमश्चैव | सकम्पश्चाविकम्पश्च | ५८ | २ |
| -हिनावधिः | -हिनावधि | ,, | ५ |
| -दसे | -से | ,, | २५ |
| एतद्विषपञ्चकं च | विषपञ्चकमेतद्धि | ५९ | १९ |
| विषपञ्चममिदं | विषपञ्चमिदं | ,, | २३ |
| वेदभागकृता | वेदभागकृता | ६२ | २२ |
| मरुतं | मरक्तं | ६३ | ११ |

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| कृष्णसूते | कृष्णभूतं | ६७ | ९ |
| गृध्रस्य च उलूकस्य | उलूकस्य च गृध्रस्य | ६८ | ६ |
| कौंचयोगकृतं | क्रौंचयोगकृतं | ६९ | ११ |
| तेषामामसृग्भिः | तेषामसृग्भिः | ७० | १ |
| दिव्यौषधिकल्पं | दिव्यौषधीकल्पं | ,, | २ |
| प्रभवति च | प्रभवति | ,, | ८ |
| गृहीतव्या | ग्रहीतव्या | ,, | १७ |
| स्नुहिपत्रा | स्नुहीपत्रा | ,, | २२ |
| ज्वलन्ती | ज्वलन्तः | ७२ | १५ |
| चैव दिव्यौषधी | दिव्यौषधिश्चैव | ७३ | १३ |
| कनटी | कुनटी | ,, | १७ |
| नज्रमूषा | वज्रमूषा | ७६ | ४ |
| तावद्वितीय- | तावद्वितीय- | ,, | १२ |
| क्रू | क्रूं | ७९ | ९ |
| 'अयमर्धश्लोको | अयमर्धश्लोको | ८२ | २३ |

आयुर्वेदीयग्रन्थमाला

सप्तमं पुष्पम्।

वैद्यवरकायस्थचामुण्डविरचिता

# रससङ्केतकलिका।

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा
संशोधिता प्रकाशिता च।

ÂYURVEDÎYA-GRANTHAMÂLÂ.

No. 7.

# RASASANKET-KALIKÂ.

BY

KÂYASTH CHÂMUNDA.

EDITED AND PUBLISHED
BY
VAIDYA JÂDAVJÎ TRICUMJÎ ÂCHÂRYA,
372, BORÂ BAZÂR STREET, FORT, BOMBAY.

1912.

मूल्यं ३ आणकाः। *Price 3 annas.*

# भूमिका ।

---

रससङ्केतकलिका नामायं ग्रन्थो नैगम( निगम )कायस्थजातीयवैद्यवरश्रीचामुण्डविरचितः। स चायं चामुण्डः कस्मिन् समये कतमे वा जनपदे समजनीति निर्णेतुं न किञ्चिदपि साधनमुपलभ्यते । ग्रन्थश्चायं लघुरपि अतिसरलत्वात् विशदार्थत्वात् दृष्टप्रत्ययाल्पप्रयत्नसाध्यप्रयोगवत्त्वाच्च रसचिकित्साग्रन्थेषु मूर्धन्यः । पुत्रप्रदरसप्रभृतयः केचन अपूर्वप्रयोगा अप्यत्रोपलभ्यन्ते । ग्रन्थस्यास्य मुद्रापणार्थमादर्शपुस्तकद्वयमुपलब्धम् । एकं मण्डीराजधानीनिवासिनां राजवैद्यानां **पं. श्रीविद्यासागरशर्मणां**, अपरं च पुण्यपत्तनस्थडेक्कनकॉलेजपुस्तकालयात् प्राप्तम् । एतत्पुस्तकद्वयसहायेन ग्रन्थसंशोधने यथामति कृतो यत्नः, तथापि भ्रमप्रमादादिवशाज्जातं स्खलनं काप्युपलभ्येत चेद्गुणैकपक्षपातिभिः सुधीभिः संशोधनीयमित्यभ्यर्थयते–

श्रावणशुक्ल ११ स. १९६८,<br>नं. ३७२ बोराबझारस्ट्रीट,<br>कोट मुंबई.

भिषजामनुग्राह्यो<br>**यादवशर्मा.**

# आयुर्वेदीयग्रन्थमाला।

कायस्थचामुण्डविरचिता

## रससङ्केतकलिका ।

### अथ प्रथमोल्लासः।

शिवं नत्वा रसेशं चामुण्डः कायस्थवंशभूः।
करोति रससङ्केतकलिकामिष्टसिद्धिदाम् ॥ १ ॥

पारदोत्पत्तिः।

स्कन्दात्तारकहिंसार्थं कैलासे विधृतं सुरैः।
रते शम्भोश्च्युतं रेतो गृहीतमग्निना मुखे ॥ २ ॥
क्षिप्तं तेन चतुर्दिक्षु क्षाराब्धौ[1] तत्पृथक्पृथक्।
सौम्यादिदिक्त्रयस्थं यद्गौरीशापान्न कार्यकृत् ॥ ३ ॥
पश्चिमायां विमुक्तं तत् सूतोऽभूत् सर्वकार्यकृत्।

रसभेदाः।

श्वेतारुणहरिद्राभकृष्णा विप्रादिपारदाः ॥ ४ ॥
देहे लोहे मदे पिष्ट्यां योज्या वा स्वस्वजातिषु।

रसदोषाः।

तेषु नैसर्गिका दोषाः पञ्च, सप्ताथ कञ्चुकाः ॥ ५ ॥
[2]मलाद्याः पञ्च दोषाः स्युर्भूजाद्याः सप्त कञ्चुकाः।
[3]कुष्ठादीन् हि प्रकुर्वन्ति रसस्था द्वादशैव ते ॥ ६ ॥

---

१ 'क्षीराब्धौ' क.। २ विषं वह्निर्मलश्चापि चाञ्चल्यं चाथ गौरवम्। दोषा नैसर्गिकाः प्रोक्ताः, स्मृताः सप्ताथ कञ्चुकाः ॥ भूमिजा गिरिजा वार्जा द्वे च द्वे ागवङ्ग जे ॥ ३ 'कुष्ठान्यष्टौ रसान्तःस्था रसे तेऽनन्तदोषदाः' क.।

रससंस्काराः ।

तेनाष्टादश संस्कारा उक्ता ज्ञैर्दोषमुक्तये ।
कर्तुं ते दुष्करा यस्मात् प्रोच्यन्ते सुकरा रसे ॥ ७ ॥
पलादारभ्य पञ्चाशत्पलं यावच्च पारदः ।
तत ऊनोऽधिको वाऽपि न संस्कार्यो रसो बुधैः ॥ ८ ॥

मर्दनम् ।

वस्त्रे चतुर्गुणे पूतः सूतः स्थाप्यः शुभेऽहनि ।
लोहार्काश्मादिखल्वे तु तप्तेष्वेव तु मर्दयेत् ॥ ९ ॥
निशेष्टिकासुरीधूमव्योषाम्ललवणैः पृथक् ।
कलांशैर्मर्दितः सूतो भवेच्छुद्धो दिनैकतः ॥ १० ॥

पातनम् ।

त्रिधोर्ध्वपातनात् पात्यः पादांशार्कयुतः शुचिः ।
हिङ्गुलादुद्धृतः सूतो भवेद्वा दोषवर्जितः ॥ ११ ॥

गन्धकजारणम् ।

गुरुशास्त्रे परित्यज्य विना जारितगन्धकात् ।
रसं निर्माति दुर्मेधाः शपेत्तं च रसेश्वरः ॥ १२ ॥
सूतं गन्धं रसैकांशं स्तोकं स्तोकं तु खल्वगम् ।
कुट्टनात् कुट्टनात् पिण्डं भवेद्वा ताम्रपात्रगम् ॥ १३ ॥
तत्तुल्यं गन्धकं दत्त्वा रुद्ध्वा तं लोहसंपुटे ।
पुटेद्भूधरयन्त्रे च यावज्जीर्यति गन्धकम् ॥ १४ ॥
एवं पुनः पुनर्देयं षड्गुणं गन्धचूर्णकम् ।
षड्गुणे गन्धके जीर्णे रसो निखिलरोगहा ॥ १५ ॥

रसबन्धभेदाः ।

पाटः खोटो जलौका च भस्माख्यश्च चतुर्थकः ।
बन्धश्चतुर्विधः सूते विज्ञेयो भिषगुत्तमैः ॥ १६ ॥
पाटः पर्पटिकाबन्धः पिष्टीबन्धस्तु खोटकः ।
जलौका पङ्कबन्धः स्याद्भस्म भस्मनिभो भवेत् ॥ १७ ॥

रसभस्मभेदाः ।

सूतभस्म द्विधा ज्ञेयमूर्ध्वगं तलभस्म च ।

ऊर्ध्वभस्मविधिः ।

ऊर्ध्वभस्मकरं यन्त्रं स्थालिकासंपुटं शृणु ॥ १८ ॥
कार्यं स्थालीद्वयं मध्ये सर्वतः षोडशाङ्गुलम् ।
लवणेनेषदार्द्रेणाऽऽपूर्य स्थालीमधोगताम् ॥ १९ ॥
सन्धिं वस्त्रमृदा लिम्पेत् संपुटीकृत्य चान्यया ।
त्रिद्वारचुल्लके स्थाप्य चतुर्यामं दृढाग्निना ॥ २० ॥
पचेत्तत्स्वाङ्गशीतं चेदुद्धृत्य लवणं त्यजेत् ।
लावणीमूर्ध्वगां कृत्वा क्षेप्योऽन्यस्यां रसेश्वरः ॥ २१ ॥
पूर्ववत्संपुटीकृत्य पश्चात्तु चुल्लके न्यसेत् ।
दृढं कृत्वाऽऽलवालं तु जलं तत्र विनिक्षिपेत् ॥ २२ ॥
उष्णं पुनः पुनस्त्यक्त्वा क्षिपेच्छीतं मुहुर्मुहुः ।
त्रिद्वारे काष्ठमेकैकं दीर्घं हस्तमितं क्षिपेत् ॥ २३ ॥
हस्तवत्पिण्डमानं तु ह्यादौ प्रज्वालयेत्सुधीः ।
द्वे द्वे काष्ठे च तस्योर्ध्वं तदूर्ध्वं त्रितयं क्षिपेत् ॥ २४ ॥
यावद्यामद्वयं पश्चादङ्गारांश्च जलं त्यजेत् ।
ऊर्ध्वस्थाल्यां तु यल्लग्नं तदूर्ध्वं भस्म सिद्धिदम् ॥ २५ ॥

तलभस्मविधानम् ।

गन्धकं धूमसारं च शुद्धसूतं समं त्रयम् ।
यामैकं चूर्णयेत् खल्वे काचकूप्यां विनिक्षिपेत् ॥ २६ ॥
रुद्ध्वा द्वादशयामं तद्वालुकायन्त्रगं पचेत् ।
स्फोटयेत्स्वाङ्गशीतं च तदूर्ध्वं गन्धकं त्यजेत् ॥ २७ ॥
तले भस्मनिभं योगवाहि स्यात् सर्वरोगहृत् ।

वर्णभेदेन रसभस्मभेदाः ।

औषधान्तरसंयोगाद्भस्मे वर्णविपर्ययम् ॥ २८ ॥

रक्तं पीतं तथा कृष्णं नीलं च पाण्डुरारुणम्।

रक्तभस्म।

निर्गुण्डीरससंयुक्तं चपलेन समन्वितम् ॥ २९ ॥
रक्तवर्णं भवेद्भस्म दाडिमीकुसुमोपमम्।

पीतभस्म।

भूधात्रीहस्तिशुण्डीभ्यां रसं गन्धं च मर्दयेत् ॥ ३० ॥
काचकूप्यां चतुर्यामं पक्वः पीतो भवेद्रसः।

कृष्णभस्म।

सूतं गन्धकसंयुक्तं कुमारीरसमर्दितम् ॥ ३१ ॥
कृष्णवर्णं भवेद्भस्म देवानामपि दुर्लभम्।

नीलभस्म।

वाराहीकन्दसंयुक्तं रसकेन समन्वितम् ॥ ३२ ॥
श्यामवर्णं भवेद्भस्म वलीपलितनाशनम्।

पाटलभस्म।

लवणान्तर्विलिप्तायां कूप्यां स्यात्पाण्डुरारुणम् ॥ ३३ ॥

प्रकारान्तरेण रसमारणम्।

सामुद्राद्येकलवणं सूतं विंशैकभागिकम्।
काञ्जिके मर्दयित्वाऽग्नौ पुटनाद्भस्मतां व्रजेत् ॥ ३४ ॥
उद्धृत्याऽन्यरसं क्षिप्त्वा यथेच्छं मारयेद्रसम्।
एवं ताम्राहिवङ्गाभ्रं मारितं स्याद्गुणप्रदम् ॥ ३५ ॥
तदम्बुपूरिते पात्रे स्थाप्यं यामाष्टकं शनैः।
त्यक्त्वा तोयं रसो ग्राह्यो पात्रस्थो भस्मसूतकः ॥ ३६ ॥
द्रोणपुष्प्या प्रसूनानि विडङ्गमरिमेदकः।
चूर्णमेषामधश्चोर्ध्वं दत्त्वा मुद्रां प्रकल्पयेत् ॥ ३७ ॥
विधाय गोलकं सम्यङ्मृण्मूषासंपुटे क्षिपेत्।
शोषयेन्मुद्रितं कृत्वा पचेद्गजपुटे ततः ॥ ३८ ॥

पारदो भस्मतामित्थं पुटेनैकेन गच्छति।
स्वाङ्गशीतं समुद्धृत्य सर्वकर्मसु योजयेत् ॥ ३९ ॥
ग्रोत्तानखर्परे चुल्ल्यां फटकीलेपिते क्षिपेत्।
पुनर्नवारसे पक्वो मर्दनान्म्रियते रसः ॥ ४० ॥

मृतरसपरीक्षा।

अतेजा अगुरुः शुभ्रो लोहहा चाऽचलो रसः।
यदा नावर्तते वह्नौ नोर्ध्वं गच्छेत्तदा मृतः ॥ ४१ ॥

रसगुणाः।

पारदः सर्वरोगघ्नो योगवाहीसरो गुरुः।
पाण्डुताकृमिकुष्ठघ्नो वृष्यो बल्यो रसायनः ॥ ४२ ॥

जीर्णानां रसादीनामधिकगुणवत्त्वम्।

सूतो धातुरसाः सर्वे जीर्णा जीर्णा गुणाधिकाः।

रसस्थापनयोग्यपात्राणि।

दन्ते शृङ्गे मणौ वेणौ रक्षयेत्साधितं रसम् ॥ ४३ ॥

गुटिकादिषु पित्तविषयोर्मानपरिभाषा।

पित्तानि षोडशांशेन विषाणामपि रक्तिका।
गुटीरसेष्वनुक्तोऽपि ज्ञेयो विधिरयं स्वयम् ॥ ४४ ॥

रससेवनविधिः।

सर्वरोगविनाशार्थं देहदार्ढ्यस्य हेतवे।
शुद्धकायश्च पथ्याशी सेवेत पूज्यपूजनात् ॥ ४५ ॥

रसमात्रा।

वल्लमेकं नरेऽश्वे तु गद्यार्णं च गजे द्वयम्।
दत्तः सूतो हरेद्रोगान् धातुयुग्वा निजौषधात् ॥ ४६ ॥

रसविकृतिलक्षणानि।

रसस्य विकृतौ सत्यां मूर्च्छा हिक्का ज्वरोऽरतिः।
कासः श्वासो भ्रमो मोहो दाहः कम्पश्च जायते ॥ ४७ ॥

रसविकृतिचिकित्सा।

तच्छान्त्यै बीजपूरस्य रसं सशुण्ठीसैन्धवम्।
पिबेद्वा गोजले सिद्धं मूलं कर्कोटजं शुभम्॥ ४८॥

रसपूजाफलम्।

यत्रागारे रसाधीशः पूज्यते बहुभक्तितः।
तदपत्यधनैः पूर्णमाधिव्याधिविवर्जितम्॥ ४९॥

इति श्रीनैगमज्ञातीयकायस्थचामुण्डकृतायां रससङ्केतकलिकायां प्रथमोल्लासः॥ १॥

---

## अथ द्वितीयोल्लासः।

धातुनिरूपणम्।

हेमरूप्यार्कवङ्गाहिलोहैर्लोहाः षडीरिताः।
अकृत्रिमा इमे घोषावर्तकाद्यास्तु कृत्रिमाः॥ १॥
शुद्धा मृता निरुत्थाश्च योजिताः सर्वरोगहाः।
अशुद्धान् हीनपाकांश्च रोगमृत्युप्रदांस्त्यजेत्॥ २॥

रसव्यतिरेकेण धातुमारणनिषेधः।

लोहं सूतयुतं दोषांस्त्यजेत्सूतश्च लोहयुक्।
अतः स्वर्णादिलोहानि विना सूतं न मारयेत्॥ ३॥

सुवर्णभेदाः।

स्वर्णं पञ्चविधं प्रोक्तं प्राकृतं सहजाग्निजम्।
एतत्स्वर्णत्रयं देवयोग्यं षोडशवर्णकम्॥ ४॥
खनिजं रसवादोत्थं सुपत्रीकृत्य शोधितम्।
तच्चतुर्दशवर्णाढ्यं मनुजार्हं रुजापहम्॥ ५॥

सुवर्णशोधनम्।

सुवर्णं सप्तशो ढाल्यं काञ्चनाररसे शुचि।

सुवर्णमारणम्।

सुवर्णे गलिते नागं प्रक्षिपेच्छोडशांशकम्॥ ६॥

अम्लेन मर्दयित्वा तु कृत्वा तस्य च गोलकम् ।
गन्धकं गोलकसमं विनिक्षिप्याधरोत्तरम् ॥ ७ ॥
शरावसंपुटे कृत्वा सन्निरुध्य प्रतापयेत् ।
त्रिंशद्वनोत्पलैरग्नौ सप्तैवं भस्मतां व्रजेत् ॥ ८ ॥

सुवर्णगुणाः ।

तिक्तं कषायं ज्वरहृत्स्वादुपाकं बलावहम् ।
वयोधीकान्तिदं वृष्यं शोषालक्ष्मीविषापहम् ॥ ९ ॥

रूप्यभेदाः ।

कैलासे सहजं रूप्यं खनिजं कृत्रिमं भुवि ।
व्युत्क्रमेण गुणैः श्रेष्ठं नागोत्तीर्णं रसे हितम् ॥ १० ॥

रूप्यशोधनम् ।

श्वेतागस्तिरसे रूप्यं स्वर्णवच्छुचि

रूप्यमारणम् ।

मारणम् ।

गन्धकाम्लकसंयोगान्नागं हित्वा क्षिपेत्रपु ॥ ११ ॥

रूप्यगुणाः ।

वयःशुक्रबलोत्साहकरं सर्वामयापहम् ।

मृतस्वर्णादिपरीक्षा ।

पृथग्भस्माम्ललिप्तोऽसिस्ताम्रवर्णस्तदा मृतिः ॥ १२ ॥

सुवर्णरूप्याभावे कान्तलोहोपयोगः ।

सुवर्णमथवा रूप्यं योगे यत्र न विद्यते ।
तत्र कान्तोद्भवं लोहं क्षेप्यं ज्ञैस्तत्समं गुणैः ॥ १३ ॥

ताम्रभेदाः ।

द्व्यर्कौ नेपालम्लेच्छौ तु रसे नेपाल उत्तमः ।
घनघातसहः स्निग्धो रक्तपत्रोऽमलो मृदुः ॥ १४ ॥
म्लेच्छस्तु क्षालितः कृष्णो रूक्षस्तब्धोऽघनासहः ।
मिश्रितो नागलोहाभ्यां न श्रेष्ठो रसकर्मणि ॥ १५ ॥

ताम्रदोषाः ।

ताम्रं तु विषवज्ज्ञेयं यत्नतः साध्यते हि तत् ।
एको दोषो विषे सम्यक्ताम्रे तेऽष्टौ प्रकीर्तिताः ॥ १६ ॥
कुष्ठं रेको वमिर्भ्रान्तिस्तापो वातश्च कामला ।
देहस्य नाशनं दोषा इत्यष्टौ कथिता बुधैः ॥ १७ ॥

ताम्रशोधनम् ।

गवां चाम्लैः पचेच्चाहस्ताम्रपत्रं दृढाग्निना ।
वारिणा क्षालयेत्पश्चादेकविंशतिधा शुचि ॥ १८ ॥

ताम्रमारणम् ।

पारदं गन्धकं ताम्रं सममम्लेन लेपयेत् ।
जायते त्रिपुटाद्भस्म वालुकायन्त्रतोऽथवा ॥ १९ ॥
गन्धकार्कौ ह्येकभागौ शरावसंपुटे पुटेत् ।
स्वाङ्गशीतं च संपेष्य खल्वे वस्त्रेण गालयेत् ॥ २० ॥
सामुद्रं तत्समं कृत्वा पुनः पुटनमाचरेत् ।
तदेव तत्क्षये देयं सामुद्रं च पुनः पुनः ॥ २१ ॥
कासीसस्य जलेनैव वारं वारं तु भावयेत् ।
चतुःषष्टिपुटैरित्थं निरुत्थं योगवाहिकम् ॥ २२ ॥
तत्ताम्रं सूरणे कन्दे पुटेत्पञ्चामृतेऽथवा ।
अष्टौ दोषांश्च पूर्वोक्तान् न करोति गुणावहम् ॥ २३ ॥
ज्वरं गुल्मं क्षयं कासमजीर्णं कफपाण्डुरुक् ।
शूलस्थौल्योदरहरमूर्ध्वाधःशोधनं परम् ॥ २४ ॥

वङ्गभेदाः ।

खुरकं मिश्रकं चेति द्विविधं वङ्गमुच्यते ।
खुरकं तु गुणैः श्रेष्ठं मिश्रकं न रसे हितम् ॥ २५ ॥

वङ्गनागशोधनम् ।

कन्याभृङ्गरसे वङ्गनागौ शोध्यौ त्रिसप्तधा ।
अथवा ब्रह्मवृक्षोत्थे क्वाथे निर्गुण्डिजेऽथवा ॥ २६ ॥

वङ्गमारणम् ।

मृद्भाजने द्रुते वङ्गे चिञ्चाश्वत्थत्वचो रजः ।
क्षिपेत्तस्य चतुर्थांशं लोहदर्व्या प्रचालयेत् ॥ २७ ॥
यावद्भस्मत्वमायाति ततः खल्वे सतालकम् ।
अम्लद्रुकाथकाम्लेन मर्द्य गजपुटे पचेत् ॥ २८ ॥
पुटे पुटे दशांशालं दत्त्वैवं दशधा पुटेत् ।
वङ्गभस्म निरुत्थं तत् पाण्डुमेहगदापहम् ॥ २९ ॥
कारीषसंपुटे वङ्गपत्रं छागशकृद्युतम् ।
म्रियते पुटमात्रेण तन्मेहान् हन्ति विंशतिम् ॥ ३० ॥

नागमारणम् ।

वङ्गवन्नागभस्मापि कृत्वादौ तत्समां शिलाम् ।
क्षिप्त्वा तप्तोदकैर्मर्द्य दत्त्वा गजपुटं ततः ॥ ३१ ॥
षष्ठ्यंशं गन्धकं दत्त्वा पाच्यं षष्टिपुटावधि ।
नागभस्म निरुत्थं तद्वङ्गभस्मगुणाधिकम् ॥ ३२ ॥

मृतवङ्गनागगुणाः ।

मृतं वङ्गं च नागं च रसभस्मसमं गुणैः ।
परस्परमलाभे च योजयेत्तत् परस्परम् ॥ ३३ ॥

लोहभेदाः ।

मुण्डं तीक्ष्णं तथा कान्तं भेदास्तस्य त्रयोदश ।
मृदु कुण्ठं च काण्डारं त्रिविधं मुण्डमुच्यते ॥ ३४ ॥
खरसारं च होत्रासं तारावर्तं बिडं तथा ।
काललोहं गजाख्यं च षड्विधं तीक्ष्णमुच्यते ॥ ३५ ॥
पात्रे यस्मिन्प्रसरति जले तैलबिन्दुर्न, लिप्तो
हिङ्गुर्गन्धं विसृजति निजं, तिक्ततां निम्बकल्कः ।
पाके दुग्धं भवति शिखराकारतां नैति भूमौ
कान्तं लोहं तदिदमुदितं लक्षणैर्नैव चान्यत् ॥ ३६ ॥

कान्तं लोहं चतुर्धोक्तं रोमकं भ्रामकं तथा ।
चुम्बकं द्रावकं चेति गुणास्तस्योत्तरोत्तराः ॥ ३७ ॥
लोहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा ।
पङ्कशुष्करसौ पूर्वौ वालुकासदृशः खरः ॥ ३८ ॥

लोहमारणम् ।

लोहपत्रं गन्धलिप्तं वह्नौ तप्तं पुनः पुनः ।
क्षिपेन्मीनाक्षिकानीरे यावत्तत्रैव शीर्यते ॥ ३९ ॥
रसहिङ्गुलगन्धेन तुल्यं तन्मर्दयेद्दृढम् ।
निर्गुण्डीवृक्षमत्स्याक्षीरसैर्गजपुटान्मृतिः ॥ ४० ॥
लोहचूर्णं वराकाथे पिण्डं कृत्वा पुनः पुनः ।
षोडशाङ्गुलमाने हि निर्वातगर्तके पुटेत् ॥ ४१ ॥
चतुःषष्टिपुटैरेवं जायते पद्मरागवत् ।
निरुत्थाम्बुतरं योगवाहि स्यात्सर्वरोगहृत् ॥ ४२ ॥
जम्बूत्वचारसे तिन्दुमार्कण्डफलजेऽथवा ।
त्रिसप्तधाऽऽतपे शोष्यं पेष्यं वारितरं भवेत् ॥ ४३ ॥
चिञ्चापत्रनिभं लोहपत्रं दन्तीद्रवे क्षिपेत् ।
घर्मे धृत्वा रसो देयो मृतं यावद्भवेच्च तत् ॥ ४४ ॥
मत्स्याक्षीरसमध्यस्थं लोहपत्रं विनिक्षिपेत् ।
त्रिंशद्दिनान्यर्ककरे ततो वारितरं भवेत् ॥ ४५ ॥

मृतलोहपरीक्षा ।

लोहमध्वाज्यगं तारं ध्मातं चेत्पूर्वमानकम् ।
तदा लोहं निरुत्थं स्यादन्यथा साधयेत्पुनः ॥ ४६ ॥

मृतलोहस्यामृतीकरणम् ।

वराकाथेऽष्टशेषे तु तत्तुल्यं घृतपायसम् ।
सिता लोहमिता ताम्रे पक्त्वा चामृतवद्भवेत् ॥ ४७ ॥

लोहगुणाः।

पाण्डुशोफप्लीहगुल्ममेहार्शोग्रहणीज्वरान्।
हन्ति कामप्रदं लोहं बलपुष्टिविवर्धनम्॥ ४८॥

लोहसेवने अपथ्यानि।

कूष्माण्डं तिलतैलं च माषान्नं राजिकां तथा।
मद्यमम्लरसं चैव त्यजेल्लोहस्य सेवकः॥ ४९॥

लोहकिट्टम्।

गोमूत्रे त्रिफलाक्वाथे तप्तं शोध्यं त्रिसप्तधा।
स्वर्णादिसर्वलोहानां किट्टं तत्तद्गुणावहम्॥ ५०॥
किट्टाद्दशगुणं मुण्डं मुण्डात्तीक्ष्णं शताधिकम्।
तीक्ष्णाल्लक्षगुणं कान्तं भक्षणात्कुरुते गुणम्॥ ५१॥

खर्परमारणं गुणाश्च।

लवणान्तर्गतं भाण्डे सत्त्वं खर्परसम्भवम्।
मुखं रुद्ध्वा विपक्वं तन्म्रियते गजवह्निना॥ ५२॥
मृतस्तु रसको रूक्षस्त्रिदोषघ्नो ज्वरापहः।
योगवाह्यतिसारघ्नः क्लेदनो विड्विबन्धकृत्॥ ५३॥

कांस्यपित्तलयोः शोधनं मारणं च।

शोधनं मारणं प्रोक्तं ताम्रवत्कांस्यपित्तले।

धातुभक्षणविकृतिचिकित्सा।

सिता गन्धयुता देया धातुभक्षणवैकृतौ॥ ५४॥

सुवर्णादीनां शीघ्रमारणप्रकारः।

अथैकं पारदं भागं गन्धकं द्विगुणं ततः।
तयोः समं सुवर्णादि निरुत्थं शीघ्रमारणम्॥ ५५॥

निरुत्थधातुलक्षणम्।

मध्वाज्यटङ्कणैर्गुञ्जागुडाभ्यां मृतधातवः।
ध्माता पिण्डीकृता नैव जीवन्ते ते निरुत्थकाः॥ ५६॥

धातूनां निरुत्थकरणम्।

तुल्यगन्धोत्थितो धातुर्मर्द्यः कन्यारसे दिनम्।
पक्वो गजपुटादित्थं सर्वो याति निरुत्थताम्॥ ५७॥

अभ्रकभेदाः।

पीतं सितासितं रक्तमेकैकं तच्चतुर्विधम्।
पिनाकं दर्दुरं नागं वज्रं चाग्नौ परीक्षयेत्॥ ५८॥
न पत्राणि न शब्दांश्च कुर्याच्चद्वज्रसंज्ञकम्।
त्रीणि ध्मातानि किट्टं हि वज्री सत्त्वं विमुञ्चति॥ ५९॥

अभ्रमारणम्।

तत्सत्त्वं विधिवद्ग्राह्यं शोध्यं मार्यं च लोहवत्।
सत्त्वाभावे तु निश्चन्द्रं रसेष्विष्टं तदुच्यते॥ ६०॥
धान्याभ्रं मेघनादैर्झषनयनजलैर्जम्भलैष्टङ्कणेन
खल्वे संमर्द्य गाढं तदनु गजपुटान् द्वादशैवं प्रदद्यात्।
मीनाक्षीभृङ्गतोयैस्त्रिफलजलयुतैर्मर्दयेत्सप्तरात्रं
गन्धं तुल्यं च दत्त्वा प्रवरगजपुटात्पञ्चतां याति चाभ्रम्॥
मृतं निश्चन्द्रतां यातमरुणं चामृतोपमम्।
सचन्द्रं विषवज्ज्ञेयं मृत्युकृद्व्याघ्ररोमवत्॥ ६२॥

मृताभ्रकस्यामृतीकरणम्।

वराम्बु गोघृतं चाभ्रं कलाषट्दिक्क्रमांशकम्।
मृद्वग्निना पचेल्लोहे चामृतीकरणं भवेत्॥ ६३॥

मृताभ्रगुणाः।

वयःस्तम्भकारी जरामृत्युहारी
बलारोग्यधारी महाकुष्ठहारी।
मृतं त्वभ्रकं सर्वरोगेषु योज्यं
सदा सूतराजस्य वीर्येण तुल्यम्॥ ६४॥

अभ्रसेवने वर्ज्यानि।

क्षाराम्लं द्विदलं वर्ज्यं कर्कोटं कारवेल्लकम्।
वृन्ताकं च करीरं च तैलं चाभ्रकसेवने॥ ६५॥

इति श्रीकायस्थचामुण्डकृतायां रससङ्केतकलिकायां द्वितीयोल्लासः॥ २॥

## अथ तृतीयोल्लासः।

गन्धकादीनां संशोधनप्रकारः।

गन्धं विषादि नेपालं गोदुग्धेऽथ शिलाजतु।
गोमूत्रेण च तालाद्यं शङ्खाद्यमम्लतः शुचि ॥ १ ॥

विषमारणम्।

रसेषूक्तं विषं ग्राह्यं तुल्यटङ्कणपेषितम्।
तन्मृतं योगवाहि स्यात् मृताभ्रायःसमं गुणैः ॥ २ ॥
नीलकण्ठाख्यमन्त्रेण विषं सप्ताभिमन्त्रितम्।
औषधे च रसे चैव दातव्यं हितमिच्छता ॥ ३ ॥
ॐ ह्रीं ग्रों श्रीं ठः श्रीनीलकण्ठाय नमः। इति मन्त्रः ॥

विषगुणाः।

नानारसौषधैर्ये तु दुष्टा यान्तीह नो गदाः।
ते नश्यन्ति विषे दत्ते शीघ्रं वातकफोद्भवाः ॥ ४ ॥

विषमात्रा।

श्रेष्ठमध्यावरा मात्रा अष्ट षट् च चतुर्यवाः।

अतिमात्रभुक्तविषप्रतीकारः।

अतिमात्रं यदा भुक्तं तदाऽऽज्यटङ्कणं पिबेत् ॥ ५ ॥
रजनीं मेघनादं वा सर्पाक्षीं वा घृतान्विताम्।
लिहेद्वा मधुसर्पिर्भ्यां चूर्णितामर्जुनत्वचम् ॥ ६ ॥

विषानर्हाः।

न देयं क्रोधने क्लीबे पित्तार्ते राजयक्ष्मिणि।
क्षुत्तृष्णाश्रमघर्माध्वसेविने क्षीणरोगिणे ॥ ७ ॥
गुर्विणीबालवृद्धेषु न विषं राजमन्दिरे।

विषयोग्याः।

हिताशने घृतक्षीररसायनरते ददेत् ॥ ८ ॥

उपविषाणि।

वज्रार्कहेमहलिनीहयारिविषमुष्टिकाः।
एतान्युपविषाण्याहुः शस्तानि रसकर्मणि ॥ ९ ॥

अहिफेनोत्पत्तिस्तद्गुणाश्च ।

रत्नाकरे मथ्यमाने वासुकेर्वदनाद्रुतः ।
फेनौघो व्याकुलत्वाच्च फूत्कारात्पतितः क्षितौ ॥ १० ॥
तेनाहिफेनं विख्यातं तिक्तं संग्राहि शोषणम् ।
मोहकृच्छ्वासकासघ्नं सेवितं त्यक्तुमक्षमम् ॥ ११ ॥
श्लेष्महृद्वातकृद्युक्त्या युक्तं तदमृतं विषम् ।
वीर्यस्तम्भकरं नृणां स्त्रीणां सौख्यप्रदायकम् ॥ १२ ॥

भृङ्ग्युत्पत्तिः ।

पुरा देवैश्च दैत्यैश्च मथितो रत्नसागरः ।
तस्मादमृतमुत्पन्नं देवैः पीतं न दानवैः ॥ १३ ॥
तदा धन्वन्तरिकरादमृतं पतितं भुवि ।
तस्मिन् सर्पैर्लेह्यमाने दर्भैर्जिह्वा द्विधा कृता ॥ १४ ॥
जिह्वासृग्विषसंभूता सिद्धमूली महौषधी ।
सा चतुर्धा सिता रक्ता पीता कृष्णा प्रसूनकैः ॥ १५ ॥

भृङ्गीगुणाः ।

आह्लादिनी बुद्धिरूपा योगे मन्त्रे च सिद्धिदा ।
सर्वरोगहरी कामजननी क्षुत्प्रबोधिनी ॥ १६ ॥

इति श्रीकायस्थचामुण्डकृतायां रससङ्केतकलिकायां तृतीयोल्लासः ॥

---

## अथ चतुर्थोल्लासः ।

### अथ रसाधिकारः ।

कियन्तोऽप्यथ वक्ष्यन्ते रसाः प्रत्ययकारकाः ।
शास्त्रं दृष्ट्वा गुरोर्वक्त्रात् संप्रदायादथागताः ॥ १ ॥

विषमज्वरे शीतभञ्जीरसः ।

पारदं रसकं तालं तुल्यं गन्धकटङ्कणम् ।
सर्वमेतत्समं शुद्धं कारवेल्ल्या रसैर्दिनम् ॥ २ ॥

---

१ 'मोहकृत्सारणं दीप्तं' क. ।

मर्दयेत्तेन दिह्याच्च ताम्रपात्रोदरं घनम्।
अङ्गुलार्धार्धमानेन तत् पचेत्सिकतालये ॥ ३ ॥
यन्त्रे यावत्स्फुटन्त्येव व्रीहयस्तस्य पृष्ठतः।
ततः सुशीतले ग्राह्यस्ताम्रपात्रोदराद्ध्रुवैः ॥ ४ ॥
तत्समं मरिचं दत्त्वा सर्वमेकत्र चूर्णयेत्।
द्विगुञ्जं पर्णखण्डेन वातिके, पैत्तिके ज्वरे ॥ ५ ॥
गुञ्जैकं ससितं दद्यात्रिगुञ्जं व्योषयुक्कफे।
सन्निपाते ज्वरे देयो वह्नैकमार्द्रकद्रवैः ॥ ६ ॥
त्रिदिनैर्विषमं तीव्रमेकद्वित्रिचतुर्थकम्।
नाशयेच्छीतभञ्ज्याख्यो रसो रुद्रेण निर्मितः ॥ ७ ॥

सन्निपातज्वरे चैतन्यभैरवः।

सूतं गन्धं शिलां तालं संमर्द्य निम्बुजैर्द्रवैः।
लिप्त्वा तन्वर्कपत्राणि यन्त्रे भस्माभिधे क्षिपेत् ॥ ८ ॥
यामाष्टौ ज्वालयेदग्निं स्वाङ्गशीतं समुद्धरेत्।
विषोषणं चतुर्थांशं दत्त्वा वल्लमिता गुटी ॥ ९ ॥
देवदालीरसैर्बद्धा रसश्चैतन्यभैरवः।
दत्ताऽऽर्द्रकरसैः सर्वसन्निपातविघातकृत् ॥ १० ॥
भूमौ गतं विसंज्ञं च शीतार्तं तन्द्रितं नरम्।
तत्क्षणाद्बोधयेद्दाहे कुर्याच्छीतोपचारकान् ॥ ११ ॥
वाराहच्छागमात्स्याश्वमायूरं पित्तपञ्चकम्।
अनेन भावितश्चापि देयश्चैतन्यभैरवः ॥ १२ ॥

सन्निपातज्वरे लघुसूचिकाभरणो रसः।

विषं रसं कलैकांशं काचलिप्तशरावके।
रुद्ध्वा चुल्ल्यां मन्दवह्नौ पचेद्यामद्वयं ततः ॥ १३ ॥
स्वयंशीतं च गृह्णीयादुपरिष्टाच्छरावकात्।
वायुवर्जं क्षिपेत्कूप्यां सन्निपातेऽहिदष्टके ॥ १४ ॥

सूच्यग्रेण च दातव्यः क्षणाज्जागर्ति मानवः ।
नो चेत्तालुप्रदेशे च क्षुरक्षुण्णे प्रचारयेत् ॥ १५ ॥

नवज्वरे शीघ्रज्वरारिरसः ।

रसहिङ्गुलनेपाला वृद्ध्या दन्त्यम्बुमर्दिताः ।
द्वौ यामौ ज्वरनाशाय गुञ्जैका सितया सह ॥ १६ ॥

चातुर्थकज्वरे चातुर्थकारिरसः ।

पुरं टङ्कद्वयं कृष्णधूर्तबीजाष्टवल्लकम् ।
पालिकात्रितयं देयं चातुर्थकज्वरापहम् ॥ १७ ॥
ज्वरागमनवेलायां शीतवारिचतुर्घटैः ।
शिरोऽभिषिच्य दातव्यं पथ्ये क्षीरं सशर्करम् ॥ १८ ॥

सर्वज्वरे अर्धनारीनटेश्वरो रसः ।

निम्बबीजं शिलाऽजाजी धूमं कृष्णा समांशकम् ।
कारवेल्ल्या रसैर्भाव्यमेकविंशतिवारकान् ॥ १९ ॥
यत्पार्श्वतोऽञ्जयेन्नेत्रे ज्वरं तत्पार्श्वजं जयेत् ।
अर्धनारीनटेशाह्वो रसः कौतुककारकः ॥ २० ॥

ज्वरातिसारे हेमसुन्दररसः ।

हिङ्गुलं मरिचं गन्धं पिप्पली टङ्कणं विषम् ।
कनकस्य तु बीजानि समांशं विजयारसैः ॥ २१ ॥
मर्दयेद्याममात्रं तु चणमात्रं वटीकृतः ।
ज्वरातिसारं ग्रहणीं नाशयेद्धेमसुन्दरः ॥ २२ ॥

ग्रहण्यामर्कलोकेश्वरो रसः ।

शुद्धसूतं पलं चार्कक्षीरैर्मर्द्यं पुनः पुनः ।
द्विपलं शुद्धगन्धस्य महाकम्बु पलाष्टकम् ॥ २३ ॥
उभे वह्निरसैर्भाव्ये शोष्ये पेष्ये दिनत्रयम् ।
मेलयेत्पूर्वसूतेन तदर्धं टङ्कणं क्षिपेत् ॥ २४ ॥
अर्कक्षीरैः पुनः सर्वं यामैकं मर्दयेद्दृढम् ।
शुष्कं चूर्णलिप्तेऽथ भाण्डे रुद्ध्वा पुटे पचेत् ॥ २५ ॥

चतुर्गुञ्जामितं खादेन्मरिचाज्येन संयुतम्।
देयं दध्योदनं पथ्यं विजया सगुडा निशि ॥ २६ ॥
ग्रहणीदोषनाशार्थं नास्त्यनेन समं भुवि।
ग्रहणीर्नाशयेत्सर्वा अर्कलोकेश्वरो रसः ॥ २७ ॥

श्वासकासारिरसः (शिलातालेश्वरः)।

कटुत्रिकरसैर्भाव्यं तालमेकं चतुःशिला।
दिनं वासारसैः पिष्ट्वा वालुकायन्त्रपाचितम् ॥ २८ ॥
द्वियामान्ते समुद्धृत्य तत्तुल्यं च कटुत्रयम्।
निर्गुण्डीमूलचूर्णं च, वासारससमन्वितः ॥ २९ ॥
शिलातालेश्वरो नाम्ना गुञ्जैका श्वासकासजित् ॥ ३० ॥

राजयक्ष्मणि राजमृगाङ्करसः।

सूतं हेमाभ्रजं भस्म शिलागन्धकतालकम्।
त्र्यैकैकभूभवैकाख्यान् कृत्वैक्यं क्रमशोऽंशकान् ॥ ३१ ॥
वराटीः पूरयेत्तेन छागीक्षीरेण टङ्कणम्।
पिष्ट्वा तेन मुखं रुद्ध्वा शरावे भूपुटे पचेत् ॥ ३२ ॥
स्वाङ्गशीतं समुद्धृत्य कृत्वा तं वस्त्रगालितम्।
रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः ॥ ३३ ॥

राजयक्ष्मणि सिद्धमृगाङ्कः।

सुवर्णं भस्मसूतं च वल्लार्धं मधुना लिहेत्।
पथ्यभुग्ब्रह्मचर्येण मृगाङ्को वा क्षयापहः ॥ ३४ ॥

राजयक्ष्मणि क्षयारिरसः।

शिलाजतुमधुव्योषताप्यलोहरजांसि यः।
क्षीरभुग्लेढि तस्याशु क्षयक्षयकरो रसः ॥ ३५ ॥

उदररोगे उदरध्वान्तसूर्यः।

शुल्वश्यामास्नुहीदन्तीपथ्यानेपालकाः क्रमात्।
भूम्येकैकाब्धियुग्वल्लानेतानुष्णाम्बुना पिबेत् ॥ ३६ ॥

अष्टोदराणि हन्त्येष विशेषेण जलोदरम्।
आध्मानगुल्मशूलघ्न उदरध्वान्तभास्करः ॥ ३७ ॥

शूलरोगे शङ्खभास्कररसः।

दग्धं शङ्खं वराटं च तुल्यार्कं नवनीतयुक्।
टङ्कार्धं भक्षयेत्सर्वशूलार्तः शङ्खभास्करः ॥ ३८ ॥

कुष्ठे रक्तारिरसः।

सूतं गन्धं तथा शुद्धं क्रमादेकद्विभागकम्।
तुल्यार्कं भावयेदार्द्ररसैश्चापि त्रिसप्तधा।
गोलं कृत्वाऽन्धमूषायां रुद्ध्वा गजपुटे पचेत् ॥ ३९ ॥
घृतशुण्ठ्या च गुञ्जैकं शीतोदं ससितं ह्यनु।
त्रिदोषं नाशयेच्छीघ्रं क्रियां शीतां प्रयोजयेत् ॥ ४० ॥
स्थूलं कृशं कृशं स्थूलं करोत्यग्निप्रदीपनम्।
त्रिदोषात्पतितं रक्तं व्रणनाड्यभिघातजम् ॥ ४१ ॥
यकृत्प्लीहोत्थितं यच्च यच्च कुष्ठकरं त्वसृक्।
शोधयेद्दुष्टरक्तं तद्रसो रक्तारिसंज्ञकः ॥ ४२ ॥

मेदोरोगे वडवाग्निरसः।

सूततारार्ककं बोलं मर्दयेमर्कपयस्त्र्यहम्।
वल्लैकं मधुना लेह्यं स्थौल्यमाशु व्यपोहति ॥ ४३ ॥
द्विपलं क्षौद्रशीतोदमनुपानं पिबेत्ततः।
वडवाग्निरसे पथ्यं दध्यादि श्लेष्मलं त्यजेत् ॥ ४४ ॥

मूत्रकृच्छ्रे त्रिविक्रमरसः।

सूतार्कौ गन्धकं मर्द्यं दिनं निर्गुण्डिकाद्रवैः।
यामैकं वालुकायन्त्रे पक्त्वा देयो द्विगुञ्जकः ॥ ४५ ॥
बीजपूरजटाक्वाथं ससितं पाययेदनु।
रसस्त्रिविक्रमो मूत्रकृच्छ्ररोधाश्मरीप्रणुत् ॥ ४६ ॥

श्वित्रे श्वेतकुष्ठारिरसः।

निस्तुषीकृत्य बाकुच्या बीजानां पलविंशतिम्।
गोजलस्थं त्रिसप्ताहं लोहं पथ्या पलद्वयम् ॥ ४७ ॥

गृहीत्वा गोजले शोष्यं सूर्यतापेऽतिनिष्ठुरे।
काकोदुम्बरिकाद्रोणत्वचां काथे त्रिसप्तकम् ॥ ४८ ॥
भावयेत्तस्य चूर्णस्य गन्धमूतं समं कृतम्।
अम्लेन कज्जलीं कृत्वा सर्वमेकत्र कारयेत् ॥ ४९ ॥
शिग्रुमूलरसेनापि नागवल्लीदलेन च।
भावनां त्रिदिनं दत्त्वा कर्षार्धांशां गुटीं कुरु ॥ ५० ॥
एकैकां भक्षयेत्प्रातः श्वेतकुष्ठोपशान्तये।
चित्रकाङ्क्रित्वचाचूर्णं रात्रौ गोदुग्धके वरम् ॥ ५१ ॥
क्षिपेद्दधि विलोड्याथ ग्राहयेत्तक्रमुत्तमम्।
तत्तक्रकुडवं चैकं मध्येऽष्टवल्लगन्धकम् ॥ ५२ ॥
प्रक्षिप्य गुटिकां पश्चात् प्रपिबेद्द्वित्रिसंख्यकाम्।
नवनीतेन चाभ्यङ्गः कार्यः स्थेयमथातपे ॥ ५३ ॥
सर्वश्वित्रे प्रजायन्ते स्फोटकाश्चाग्निदग्धवत्।
प्रथमे सप्तके, पाको जायतेऽथ द्वितीयके ॥ ५४ ॥
रोहणं च तृतीये हि कुर्वन्ति च न संशयः।
निम्बुकस्य रसोपेतं कुङ्कुमालेपनं हितम् ॥ ५५ ॥
सतक्रा गुटिका वाऽपि रसस्यालेपने हिता।
श्वित्राणां रोहणं रम्यं वर्णदं जायते भृशम् ॥ ५६ ॥
त्रिवेलं तक्रभक्तं च पूर्वे देयं च सप्तके।
मकुष्ठा अपि रूक्षाश्च देया जाते द्विसप्तके ॥ ५७ ॥
तृतीये सप्तके देया मकुष्ठास्त्रिफलाघृतम्।
घृतमल्पं प्रदातव्यं श्वित्रकुष्ठी वरो भवेत् ॥ ५८ ॥
चम्पकाभं वरं देहं कान्तियुक्तं च नीरुजम्।
प्राप्नुयाच्छ्रीयुतः सम्यङ्मनुजो भूमिमण्डले ॥ ५९ ॥
रसराजप्रभावेण सत्यं सत्यं च नान्यथा।

वातरोगे स्वच्छन्दभैरवो रसः।

शुद्धसूतं मृतं लोहं ताप्यगन्धकतालकम्।
पथ्याग्निमन्थनिर्गुण्डीत्र्यूषणं टङ्कणं विषम् ॥ ६० ॥

तुल्यांशं मर्दयेत्खल्वे दिनं निर्गुण्डिकाद्रवैः ।
मुण्डीद्रवैर्दिनैकं तु गुञ्जैकं वटकीकृतम् ॥ ६१ ॥
भक्षयेद्वातरोगार्तो रसं स्वच्छन्दभैरवम् ।
लघुरास्नाद्वयं क्वाथं सपुरं ह्यनुपानकम् ॥ ६२ ॥

उन्मादापस्मारयोरुन्मादगजकेसरीरसः ।

शुद्धं सूतं वचाक्वाथैस्त्रिदिनं मर्दयेत्ततः ।
शङ्खपुष्पीरसैस्तद्वद्गन्धकं मर्दितं क्षिपेत् ॥ ६३ ॥
गोमूत्रमर्दितं गोलं कृत्वा मुष्यां निरोधयेत् ।
सप्तधाऽऽलेप्य मृद्वस्त्रैः पुटितं स्वाङ्गशीतलम् ॥ ६४ ॥
चूर्णीकृतं चतुर्वल्लं समसर्षपचूर्णकम् ।
जीर्णघृतानुपानं च नस्ये स्नेहं तु सार्षपम् ॥ ६५ ॥
कारयेत्तेन चाभ्यङ्गं दिनानामेकविंशतिम् ।
उन्मादापस्मृतिं हन्ति ह्युन्मादगजकेसरी ॥ ६६ ॥

अग्निमान्द्ये क्रव्यादरसः ।

सूतं गन्धमयस्ताम्रमेकद्व्यर्धार्धकं पलम् ।
द्रावयेल्लोहजे पात्रे क्षिपेदेरण्डपत्रके ॥ ६७ ॥
चूर्णितं वस्त्रपूतं च लोहपात्रे पुनः पचेत् ।
जाम्बीरं बैजपूरं वा रसं पात्रमितं क्षिपेत् ॥ ६८ ॥
संचूर्ण्य पञ्चकोलोत्थैः कषायैश्चाम्लवेतसैः ।
भावनाः खलु दातव्याः पञ्चाशत्प्रमितास्ततः ॥ ६९ ॥
भृष्टटङ्कणचूर्णं तु दद्यात्सर्वसमानकम् ।
टङ्कणार्धं बिडं दद्याद्बिडतुल्यं मरीचकम् ॥ ७० ॥
सप्तधा भावयेच्चाशु चणकक्षारवारिणा ।
एवं सिद्धरसाद्वल्लद्वितयं वा चतुष्टयम् ॥ ७१ ॥

---

१ 'रास्नागोक्षुरकैरण्डदेवदारुपुनर्नवाः । गुडूच्यारग्वधश्चैव लघुरास्नादिव स्मृतः' ॥

सैन्धवं माषमेकं तु जीरकं च द्विमाषकम्।
तक्रेण योजितं चैतदनुपानं पिबेत्सुधीः॥ ७२॥
भोजयेत्कण्ठपर्यन्तं गुरुमामिषभोजनम्।
क्षिप्रं तज्जीर्यते भुक्तं पुनः काङ्क्षति भोजनम्॥ ७३॥
घटश्रवाकुम्भयोनिवृकोदरशनैश्वरैः।
सहस्रदृक्पञ्चचतुर्मुखैरासेवितोऽग्नये॥ ७४॥
अस्य संसेवनादेते सर्वे जाता महाशनाः।
अतः संसेव्यते भूपैर्महदग्निविवृद्धये॥ ७५॥
कुर्याद्दीपनमद्भुतं च पचनं दुष्टामयोच्छेदनं
तुन्दस्थौल्यनिबर्हणं, गरहरः शूलार्तिमूलापहः।
गुल्मप्लीहविनाशनो बहुरुजां विध्वंसनः स्रंसनो
वातग्रन्थिमहोदरापहरणः क्रव्यादनामा रसः॥ ७६॥
सिंहणक्षोणिपालाय भूरिभोज्यप्रिये रसम्।
दत्तवान् भैरवानन्दो भूयो ग्रामाष्टकं ददौ॥ ७७॥

अग्निमान्द्ये वडवानलरसः।

सूतं भुजङ्गममृतं लवणं हरिद्रा
व्योषं धनञ्जयजटाऽवनिभूतधात्री-।
कष्टादशद्वयनिधित्रयभागसङ्ख्याः
शोभाञ्जनार्द्रककरीरकबीजपूरैः॥ ७८॥
निम्बूफणीश्वरलतासुपलाशतोयै-
र्भाव्या विशोष्य खरले प्रविधाय चूर्णम्।
वल्लस्तुतं सकलवातगणान्निहन्ति
वह्नेरपाटवमरोचकशूलवान्तीः॥ ७९॥

मन्दानले अग्निकुमाररसः।

सूतं गन्धं विषं शङ्खं कपर्दं टङ्कणोषणे।
चन्द्रैकाग्निगजत्रिद्विवसुभागैर्मितं क्रमात्॥ ८०॥

जम्बीरकेण संमर्द्य भवेदग्निकुमारकः।
वाते मन्दानलेऽजीर्णे ज्वरश्लेष्मविषूचिके॥ ८१॥
गुञ्जामात्रं प्रदातव्यो विण्मूत्रशिरसोग्रहे।
कासे श्वासे क्षये शूले सर्वरोगेषु योजयेत्॥ ८२॥

गुल्मादौ शङ्खद्रावरसः।

फिटकरीं सादरं सोरं त्रयमेकत्र चूर्णयेत्।
तत्क्षिपेन्मृण्मये कूपे नालहस्तमिते दृढे॥ ८३॥
सरन्ध्रोदरकाचोत्थे कूपे तत्सन्नियोजयेत्।
सप्तधा वेष्टयेत्पश्चात्कूपकौ वस्त्रमृत्स्नया॥ ८४॥
खर्परे वालुकापूर्णे तिर्यगौषधकूपकम्।
अर्धं यन्त्रे निधायाथ श्रीगुरोः संप्रदायतः॥ ८५॥
अधोमुखं, द्वितीयं तु स्थाप्यं चुल्लेः पराङ्मुखे।
अधः प्रज्वालयेदग्निं हठाद्यावद्रसः स्रवेत्॥ ८६॥
धारयेत्काचजे पात्रे शङ्खद्रावं रसायनम्।
शाणैकं सेवयेत्पश्चाद्दन्तस्पर्शविवर्जितम्॥ ८७॥
गुल्मोदरयकृत्प्लीहविद्रधिग्रन्थिशूलनुत्।
बलपुष्टिप्रदो ह्येष भुक्तं जारयते क्षणात्॥ ८८॥
विलोक्यतामहो लोका रसमाहात्म्यमद्भुतम्।
कपर्दकाम्बुलोहानि यस्मिन् क्षिप्ते गलन्ति हि॥ ८९

धातुक्षये हरगौरीरसद्वयम्।

पारदं तत्तृतीयांशं गन्धं दत्त्वा तु मर्दयेत्।
दशांशनवसारेण युतं चोन्मत्तवारिणा॥ ९०॥
खल्वे संमर्द्य तत्सर्वं काचकुप्यां निवेशयेत्।
गुरूक्तसंप्रदायेन वालुकायन्त्रमध्यगम्॥ ९१॥
पचेत् षोडशयामांश्च मन्दमध्यहठाग्निना।
पक्वः सुशीतलो ग्राह्यो हरगौरीरसो भवेत्॥ ९२॥

मूतं गन्धं समं कृत्वा सर्पाक्षीरसमर्दितम्।
पूर्ववत्पाचितं त्वन्ये हरगौरीरसं विदुः॥ ९३॥

धातुक्षये मदनकामदेवरसः।

पारदाद्विगुणं गन्धं दत्त्वा कार्पासिकाद्रवैः।
पूर्ववत्पाचितो ह्येष तदा मदनकामदः॥ ९४॥

धातुक्षये मृत्युञ्जयरसः।

एकांशं क्षिप्यते स्वर्णं रूप्यं ताम्रं च तत्समम्।
मुशल्या चाखुपर्ण्या च मातुलुङ्गरसैस्त्र्यहम्॥ ९५॥
मोचचिञ्चात्मगुप्ताभिस्तदा मृत्युञ्जयो रसः।

हरगौरीकामदेवमृत्युञ्जयरसाः।

त्रयाणां सेवनं पथ्यमुच्यते क्रमशो गुणाः।
एकमासं सिताज्याभ्यां सदा सेव्यो नरोत्तमैः॥ ९६॥
एवं निषेव्य सूतेन्द्रं भुञ्जीत मधुरं सदा।
शाल्यन्नं गोपयः खण्डं सितां जाङ्गलमामिषम्॥ ९७॥
गोधूमजान् विकारांश्च माषान्नं कदलीफलम्।
पनसं चाथ खर्जूरं द्राक्षां च नालिकेरकम्॥ ९८॥
सेवेत सर्वं तत्प्राज्ञो वृष्यं यत्किञ्चिदुच्यते।
वलीं संवत्सराद्धन्ति पलितं च द्विहायनात्॥ ९९॥
वज्रदेहो भवेत्सेवी द्रावयेद्वनिताशतम्।
न रेतःसंक्षयस्तस्य षण्ढोऽपि पुरुषायते॥ १००॥
ऊर्ध्वलिङ्गः सदा तिष्ठेल्ललनामक्षयं व्रजेत्।
तप्तहाटकवर्णाभः श्रीधीमेधाविभूषितः॥ १०१॥
हयवेगो मयूराक्षो वराहश्रुतिरेव च।
अपरः कामदेवोऽपि मानिनीमानमर्दनः॥ १०२॥
राजयक्ष्मादिरोगांश्च मेहान् जीर्णज्वरानपि।
गोतक्राद्ग्रहणीं हन्त्यतीसारं बहुमूत्रताम्॥ १०३॥

सर्वरोगहरो ह्येष निर्जौषधानुपानतः ।
हरगौरी कामदेवो रसो मृत्युञ्जयाभिधः ॥ १०४ ॥
किमत्र बहुनोक्तेन जरामृत्युहरास्त्रयः ।

वाजीकरणार्थे मानिनीमानमर्दनरसः ।

कज्जलीं सूतगन्धाभ्यां तुल्यमुन्मत्तबीजकम् ।
तच्चैलमर्दितं सेव्यं द्विवल्लंससितापयः ॥ १०५ ॥
मेहौघं नाशयेद्वीर्यं स्तम्भयेद्द्रावयेत्स्त्रियम् ।
रसः कामप्रदो नृणां मानिनीमानमर्दनः ॥ १०६ ॥

प्रमेहे कामदो रसः ।

हेमबीजविषवङ्गसूतकं हंसपादकरभं च जारणम् ।
नागवल्लिदलद्रावभावितः कामदः सकलमेहनाशनः १०७

सन्तानार्थे पुत्रप्रदो रसः ।

शुद्धसूतं त्र्यहं स्वेद्यं मन्दाग्नौ दध्नि माहिषे ।
त्रुटिते त्रुटिते दद्याद्दधि तुर्येऽह्नि चोद्धरेत् ॥ १०८ ॥
तस्मिन् स्वर्णं क्षिपेत्प्राज्ञश्चतुःषष्टितमांशकम् ।
मर्दयेन्निम्बुनीरेण यावदैक्यं हि जायते ॥ १०९ ॥
पुनः संस्वेद्य तं सूतं वटशुङ्गाहिवल्लिजैः ।
काकमाच्या च जीवन्त्या रसः स्याद्यामयुग्मकात् ॥११०॥
दिनं शीताम्बुकुम्भस्थं दिनैकं दध्नि माहिषे ।
एवं सिद्धरसाद्वल्लं प्रत्यहं ब्रह्मचर्यधृक् ॥ १११ ॥
मासैकं सेवते भर्ता सितादुग्धौदनप्रियः ।
त्रिफलानिम्बकार्पासीरसैर्नारी क्रमात्पृथक् ॥ ११२ ॥
सप्त सप्त दिनान् पीत्वा पश्चादृतुसमागमे ।
रसं वल्लं त्र्यहं चैकं कार्पास्यम्बुसितायुतम् ॥ ११३ ॥
टङ्कणं तूरिका सूतं पक्वाम्लिकरसान्वितम् ।
त्रिदिनं मधुना योनेर्लेपं शुद्धिकरं परम् ॥ ११४ ॥

महिष्या दधिमध्यस्थं दिवा सूतं त्रिमाषकम् ।
स्त्रीसेवासमये रात्रौ भक्षयेद्दधिसंयुतम् ॥ ११५ ॥
संभोगान्ते तथा स्थेयं यामार्धं संपुटेन च ।
सर्वलक्षणसंपन्नं सुतं जनयते वरम् ॥ ११६ ॥
तापादिके समुत्पन्ने देयं द्राक्षासितादिकम् ।
कार्यः शीतोपचारश्च युवत्या भिषजा सदा ॥ ११७ ॥
आयुर्वृद्धिं बलं कान्तिं नष्टवीर्यविवर्धनम् ।
कुर्याद्रोगहरः पुत्रप्रदो रुद्रविनिर्मितः ॥ ११८ ॥

नेत्ररोगे दिव्यदृष्टिकरो रसः ।

रसं नागाञ्जनं चन्द्रमेकैकव्यर्धभागकम् ।
सूक्ष्मचूर्णीकृतं नेत्रस्याञ्जनाद्दिव्यदृष्टिकृत् ॥ ११९ ॥

उदररोगे सारणसुन्दररसः ।

सूतं गन्धं समं शुद्धं सप्तधा भावयेत् क्रमात् ।
स्नुह्यर्कदुग्धैः श्रीखण्डद्वयपथ्याभयारसैः ॥ १२० ॥
समं नेपालजं चूर्णं देयमेकत्र मर्दयेत् ।
उष्णाम्बुना वल्लयुग्मं देयमष्टगुणे गुडे ॥ १२१ ॥
मलाः पूर्वं जलं पश्चात्ततश्चामः शनैः शनैः ।
उदराच्च विनाऽन्त्राणि सर्वं निर्याति किल्बिषम् ॥ १२२ ॥
जाते विरेके संशुद्धे पथ्यं दध्योदनं हितम् ।
जयेज्ज्वरादिकान् रोगान् रसः सारणसुन्दरः ॥ १२३ ॥

वमनकारकरसः ।

राढार्कौ मधुकं चैकसार्धद्विपञ्चभागकम् ।
टङ्काम्बुयुतं दत्तं रसोऽयं वामकः स्मृतः ॥ १२४ ॥

सन्निपातज्वरे उन्मत्ताख्यो रसः ।

रसं गन्धं समं व्योषं मर्द्यमुन्मत्तकैर्दिनम् ।
उन्मत्ताख्यो रसो नाम नस्ये स्यात्सन्निपातजित् ॥ १२५ ॥

वामकेश्वररसः।

ताम्रपत्रं गन्धलिप्तं वह्नौ तप्तं तु ताडितम्।
तच्चूर्णं तक्रसंयुक्तं वल्लार्धं वामयेद्भृशम्॥ १२६॥

सन्निपातादौ संज्ञाप्रबोधनरसः।

फिट्करी तुत्थनेपालं मरिचं निम्बबीजकम्।
पुत्रजीवकमज्जा च निम्बुकेनार्कभाजने॥ १२७॥
भावना सप्त दातव्या गुटी गुञ्जामिताऽञ्जनात्।
सन्निपातमपस्मारं विषं सर्पस्य नाशयेत्॥ १२८॥

स्वेदातिप्रवृत्तौ उद्धूलनरसः।

आकल्लकं विषं कृष्णं हेमद्रुफलभस्मकम्।
उद्धूलनं स्वेदहरमेकद्वित्र्यष्टभागकैः॥ १२९॥

इति कायस्थचामुण्डकृतायां रससङ्केतकलिकायां चतुर्थोल्लासः॥

---

## अथ पञ्चमोल्लासः।

### अथातो गुटिकाधिकारः।

सर्वरोगे जयागुटिका।

विषं व्योषं हरिद्राब्दं निम्बपत्रं विडङ्गकम्।
गुटी छागाम्बुना बद्धा स्याज्जया योगवाहिका॥ १॥

कासादौ विजयागुटिका।

सूतार्कायोविषं गन्धं विडङ्गाग्न्यब्दकेसरम्।
रेणुका ग्रन्थिकं बोलं सर्वेषां द्विगुणं गुडम्॥ २॥
कोलप्रमाणां गुटिकां भक्षयेत्प्रातरेव हि।
कासे श्वासे क्षये गुल्मे प्रमेहे विषमज्वरे॥ ३॥
शोफे पाण्ड्वामये कुष्ठे ग्रहण्यर्शोभगन्दरे।
विजया गुटिका ह्येषा रुद्रप्रोक्ताऽधिका गुणैः॥ ४॥

अर्शोरोगादौ शङ्करवटिका।

ङ्कोलाग्नी च गन्धोषणरसविषकं पिचमाजं क्रमात्त-
त्साम्रुद्रं चार्कदुग्धैस्त्रिभिरथ पुटितं जम्भतोयैर्विमर्द्य।

कृत्वा गुञ्जासमानामिषुशररसदिग्वह्निबाणेषुदिग्भि-
र्दद्याच्छ्लेष्मानिलार्शोज्वरजठरकफे तां वटीं शङ्कराख्याम्॥५

ग्रहण्यादौ शङ्खवटिका।

चिञ्चाक्षारपलं पटुव्रजपलं निम्बूरसैः कल्कितं
तस्मिन् शङ्खपलं प्रतप्तमसकृन्निर्वाप्य शीर्णावधिम्।
हिङ्गुव्योषपलं रसामृतवलीन्निक्षिप्य निष्कांशकान्
बद्ध्वा शङ्खवटी क्षयग्रहणिकागुल्मांश्च शूलं जयेत्॥६॥

कासे कासकर्तरीवटिका।

रसं कृष्णाऽभया त्वक्षं वासा भार्गी क्रमोत्तरम्।
तत्समं खादिरं सारं बब्बूलक्वाथभावितम्॥ ७ ॥
एकविंशतिवारांश्च मधुनाऽक्षमिता वटी।
कासं श्वासं क्षयं हिक्कां हन्त्येषा कासकर्तरी॥ ८ ॥

शूलरोगे सूर्यप्रभावावटिका।

व्योषग्रन्थिवचाग्निहिङ्गुजरणद्वन्द्वं विषं निम्बुक-
द्रावैरार्द्रकजै रसैर्विमृदितं तुल्यं मरीचोपमा।
वर्तिः सा विनिहन्ति शूलमखिलं सर्वाङ्गजं मारुतं
वह्निं चाशु करोति वाडवसमं सूर्यप्रभावाभिधा॥ ९ ॥

प्रमेहे चन्द्रकला गुटिका।

एला सकर्पूरसिता सधात्री जातीफलं शाल्मलिगोक्षुरौ च।
सूतेन्द्रवङ्गायसभस्म सर्वमेतत्समानं परिभावयेच्च॥ १० ॥
गुडूचिकाशाल्मलिकाकषायैर्निष्कार्धमाना मधुना ततश्च।
बद्ध्वा गुटी चन्द्रकलेति संज्ञा मेहेषु सर्वेषु नियोजनीया॥११॥

क्लैब्ये भोगपुरन्दरीगुटिका।

हिङ्गुलं च चतुर्जातं लवङ्गौषधचन्दनम्।
जातिजं केसरं कृष्णा त्वाकल्लमहिफेनकम्॥ १२ ॥
कस्तूरीन्दु समं सर्वं तत्समे विजयासिते।
क्षौद्रात्कोलमिता कार्या गुटी भोगपुरन्दरी॥ १३ ॥

शुक्रस्तम्भकरी ह्येषा बलमांसविवर्धिनी।
नरश्चटकवद्गच्छेच्छतवारं स्थिरेन्द्रियः॥ १४॥

नागार्जुनीगुटिका।

वङ्गं कासीसकं कृष्णा गुञ्जातुल्याऽऽर्द्रकाम्बुना।
कफवातामयं हन्ति गुटी नागार्जुनाभिधा॥ १५॥

विषरोगे महामृत्युञ्जया गुटिका।

त्रिफलाविडङ्गसोमाभल्लातकवह्निविश्वानाम्।
अष्टौ शुक्रवचाया भागा स्युः सद्विषस्यैकः॥ १६॥
सर्पविषूचिगदार्ते दुष्टाजीर्णहते त्रिदुष्टेऽपि।
सद्यो जीवति पुरुषो मृतोऽपि गुटिकाप्रभावेण॥ १७॥

उन्मादे कितववटिका।

मूलेन पत्रेण फलेन वाऽपि व्योषान्विता या कितवोद्भवेन।
बद्धा गुटी सा सहसैव हन्ति सोन्माददोषत्रयदुष्टवातान्॥१८॥

अलर्कविषहा गुटिका।

कट्फलाम्बुगिलं कृष्णां हिङ्गुलं बोलटङ्कणम्।
गुडेन गुटिका शाणमिता सा नवमेऽहनि॥ १९॥
उष्णोदकेन दातव्या सद्योऽलर्कविषापहा।
गरभृङ्गोषणं चूर्णं साज्यं वा तद्विषापहम्॥ २०॥

सन्निपाते मृतसञ्जीवनी गुटिका।

रसराजशुल्वगन्धकसुरतिक्तैः पीतभृङ्गमरिचैश्च।
ब्राह्मीद्वितयरसाढ्या गुटिकाः कार्याश्च चणकाभाः॥ २१॥
एका देया प्रथमं त्रिदोषविकलस्य मूर्च्छितस्यापि।
अन्या मुहूर्तपरतः प्रहरादन्याऽपरा नैव॥ २२॥
जीवति मृतोऽपि पुरुषस्त्रिदोषजान्विततन्द्रिकायुक्तः।
श्रीनागार्जुनगदिता गुटिका मृतसञ्जीवनी ख्याता॥२३॥

ज्वरनाशिनी गुटिका ।

एल्वालुकाभयाबोलमिन्द्रा गुग्गुलुसंयुता ।
स्नुहीक्षीरेण गुटिका शोधनी ज्वरनाशिनी ॥ २४ ॥

नेत्ररोगे नागार्जुनी वर्तिका ।

वरा व्योषं वरं तुत्थं यष्टीवेल्लार्कवारिजम् ।
रोध्रं रसाञ्जनं चूर्णं वर्तिः कार्या नभोम्बुना ॥ २५ ॥
सद्योऽक्षिकोपं स्तन्येन तिमिरं रोध्रतोयतः ।
किंशुकस्य रसाद्धन्ति पिल्लं पुष्पं च रक्तताम् ॥ २६ ॥
पटलं बत्समूत्रेण स्तम्भे पाटलिपत्तने ।
नागार्जुनेन लिखिता सर्वनेत्रामयापहा ॥ २७ ॥

सन्निपाते सुप्रचेतना गुटिका ।

व्योषं वरा वरं हिङ्गु तिक्तोग्रा नक्तमालकः ।
गौरी कटु त्वजामूत्रैश्छायाशुष्का गुटी कृता ॥ २८ ॥
अपस्मारं स्मृतिभ्रंशमुन्मादं शिरसो रुजम् ।
नक्तान्ध्यं तिमिरं हन्ति दोषं भूतादिकं भ्रमम् ॥ २९ ॥
एकद्वित्रिचतुर्थाख्यमञ्जनाज्ज्वरमेव च ।
सन्निपातं त्वचैतन्यं नाशयेत्सुप्रचेतना ॥ ३० ॥

ज्वरनाशनो विरेकः ।

सैन्धवेन युतं वज्रक्षीरमग्निविपाचितम् ।
द्विवल्लमुष्णकैः पीतं विरेकाज्ज्वरनाशनम् ॥ ३१ ॥

वमनकारको रसः ।

लवणं भानुदुग्धेन सकृद्भावितमातपे ।
गव्येन पयसा पीतं कषार्धं वान्तिकारकम् ॥ ३२ ॥

वातरोगादौ महद्धातारितैलम् ।

सूतेन्द्रं बलितालकं च कुनटी खल्वे समांशं दिनं
सौवीरेण विमर्द्य तेन वसनं वर्तीकृतं लेपयेत् ।

तैलेन प्रविलेपितं च बहुशो वह्निं ततो दीपये-
त्तस्माद्यद्गलितं च तैलमसितं तेनाङ्गलेपः कृतः ॥ ३३ ॥
जङ्घाबाहुकराग्रपादशिरसां कम्पानशेषाञ्जये-
त्कुष्ठं तीव्रभगन्दरं व्रणगणान्रोगान्महागृध्रसीम् ।
अन्यान् रोगगणांश्च वातजनितान्नाडीव्रणान्दुस्तरान्
विख्यातं भुवनत्रये गदहरं वातारितैलं महत् ॥ ३४ ॥

कर्णरोगे कर्णामृतं तैलम् ।

रामठं निम्बपत्राणि फेनः सागरसंभवः ।
एतानि समभागानि तद्वद्देयं सितं विषम् ॥ ३५ ॥
गोमूत्रेण समायुक्तं कटुतैलं विपाचितम् ।
तेनैव पूरयेत्कर्णं नरकुञ्जरवाजिनाम् ॥ ३६ ॥
कर्णरोगं निहन्त्याशु लेपनाच्छिरसो गदान् ।
नाम्ना कर्णामृतं तैलं ब्रह्मणा निर्मितं स्वयम् ॥ ३७ ॥

राजवल्लभधूपः ।

कस्तूरीन्दुश्च बाह्लीकं नखं मांसी च सर्जकम् ।
मुस्ताऽगुरु सिता सर्वं क्रमवृद्धं समं पुरम् ॥ ३८ ॥
स्तोकं स्तोकं क्षिपेच्चैलं दिनैकमथ कुट्टयेत् ।
वर्तिं कुर्यात् प्रदीप्ता सा दिव्यं धूमं विमुञ्चति ॥ ३९ ॥
सर्वदेवप्रियः सर्वमन्त्रसिद्धिप्रदायकः ।
स्नाने वस्त्रे रतागारे धूपोऽयं राजवल्लभः ॥ ४० ॥

इति नैगमज्ञातीयकायस्थचामुण्डकृतायां रससङ्केतकलिकायां
पञ्चमोल्लासः ॥

समाप्तेयं रससङ्केतकलिका ।

## रससङ्केतकलिकापाठसंशोधनम् ।



| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| नागवङ्ग जे | नागवङ्गजे | १ | २२ |
| निशेष्टिकासूरी– | निशेष्टिकासुरी– | २ | ९ |
| निजौषधात् | निजौषधैः | ५ | २३ |
| दत्त्वा | दद्यात् | ९ | १२ |
| निर्गुण्डीवृक्ष– | निर्गुण्डीपत्र– | १० | ९ |
| गजपुटादित्त्थं | गजपुटादित्थं | ११ | २९ |
| –कारी | –कारि | १२ | १९ |
| –हारी | –हारि | ,, | ,, |
| –धारी | –धारि | ,, | २० |
| –हारी | –हारि | ,, | ,, |
| वज्रार्क– | वज्र्यर्क– | १३ | २७ |
| देयं चातुर्थकज्वरापहम् | देयश्चातुर्थकज्वरापहः | १६ | ८ |
| धूमं | धूमः | ,, | १२ |
| कुर्वन्ति च | प्राप्नुवन्ति | १९ | १५ |
| उन्मादापस्मृतिं | उन्मादापस्मृती | २० | १३ |